स्वापात्परत निभृतत्वमतिद्विषन्त-
श्शाखामृगा अपि निगृह्य मतिं श्रमेण ।
मोर्धवमूवुरह ! संयमिसंस्तवेन
शोकापनोदपदवीमिव लब्धुकामाः ॥ २८ ॥

शाखावलम्बिवपुषश्च वलीमुखानां
डोलायिताः कतिपयेऽजगरा द्रुमेषु ।
वीरुद्भ्रमाद् द्विरदवृन्दकरैर्विकृष्य
दूरेतरां सपदि चिक्षिपिरे जवेन ॥ २९ ॥

सद्योनिगीर्णमदवारणदन्तुराणि·
पीनोदराण्यजगराश्शयिता दधानाः ।
स्वेदद्रवान्निजशरीरभवानपीप्य-
न्नभ्यर्णगामि कृकलासकुलं तृषार्तम् ॥ ३० ॥

द्वारेषु मृत्युनगरस्य विदारितेषु
वक्त्रेष्वयत्नपतितान्विपिनद्विपानाम् ।
स्तोमान्यथेच्छमह ! जग्रसिरे क्षुधार्ता
भाग्योदयादजगराश्चलशैलकल्पाः ॥ ३१ ॥

यत्नेन कन्दफलमूलसमित्कुशादी-
न्याहृत्य नैजमुटजं व्रजमानजन्तः ।
उद्यम्य दण्डनिवहान्परिभर्त्स्य रिक्त-
हस्तीकृता मुनिसुता. पथि वानरेन्द्रैः ॥ ३२ ॥

स्वैरं प्रसार्य फणिनः स्वफणाश्चरन्तो
गारुत्मतेन विरुतेन निकुञ्चिताङ्गाः ।
त्रासान्वितास्तमसि दुर्गमवेणुमूल-
वल्मीकमहनिषु सन्न्यविशन्त सद्यः ॥ ३३ ॥

यावत्सरोवरमथातरदल्पगाधं
तावद्व्यकम्प्यत बलाद् वनवारणेन्द्रः ।
ग्राहेण भीमवपुषाभिनिरम्बिनान्ते
कृच्छ्रादमुच्यत सुहृद्वरहस्तिसार्थैः ॥ ३४ ॥

तीक्ष्णैरथ.तरतरैर्महिषा विषाणै-
र्धन्या निपानसलिलानि विलोडयन्तः ।
दुर्दर्शवक्त्रकुहरानुपरुष्टभावो
नालीगनन्दन ! मनागपि पुण्डरीकान् ॥ ३५ ॥

रोमन्थमभ्यसितुमारभतोपविष्टं
प्रच्छायपादपतले सुखमेणवृन्दम् ।
तेनारमन्त परिमृज्य तदङ्गकानि
स्वैरङ्कुमारनिकराश्च तपोधनानाम् ॥ ३६ ॥

लीना मरालमहिलाः कमलोदरेषु
शैलेन्द्रकन्दरगृहेषु मयूरनार्यः ।
एणाङ्गनाश्च मुनिपर्णगृहाङ्गणेषु
पुष्पेषु भृङ्गललनाश्च निदाघतप्ताः ॥ ३७ ॥

नोदेति नास्तमयते परमार्थतो यो
लोकान्सृजत्यवति संहरति प्रभावात् ।
द्रष्टा च यः सुकृतदुष्कृतयोस्समेषां
मित्रः क्रमेण भगवानजहात्स्वतापम् ॥ ३८ ॥

तस्मिन्क्षणे द्युमणिरैन्द्र भृशं प्रतीच्या
संरक्तया कनककेतकदाम दत्तम् ।
धृत्वेव काननमनोकहसङ्कुलं त-
दन्वग्निशङ्कमभितः प्रकरैः कराणाम् ॥ ३९ ॥

नीडोदरेषु तिमिरं निशि मा प्रसाङ्क्षी-
दित्याकलय्य निजचञ्चुपुटैश्शकुन्ताः ।
धृत्वा च्छदैर्विरहिता रजनीमुखान्ते
खद्योतकीटनिवहान्यत ! निक्षिपन्ति ॥ ४० ॥

पाटीरमेदुरमहाद्रिपयोधराढ्या
ज्योत्स्नांशुका गिरिसरिद्रशनासनाथाम् ।
पुष्पोद्गमेन सुभगा विपिनान्तलक्ष्मी-
मालिङ्गदिन्दुरमृतपरिं करैः स्वैः ॥ ४१ ॥

कुञ्जेषु गुञ्जदलिभिः परिरञ्जितेषु
पुष्पोद्गमैः परिमलैर्निचुलाटनेषु ।
सम्फुल्लमल्लिपरिकल्पिततल्पकेषु
नित्यं पुरन्ध्रिभिरकुर्वत मारकेलिम् ॥ ४२ ॥

मन्दानिलाकुलितवल्लिनिकुञ्जपुञ्ज-
गुञ्जन्मनोज्ञमधुपव्रजमञ्जुलेयम् ।
एणार्भकैस्तत इतः कुतुकाद्द्रुताङ्घ्रि
कं प्रापयेत्सहृदयं न वनोदरश्रीः ॥ ४३ ॥

स्वैरङ्करैः परिमर्षा कृशोदरीणा-
मिन्दुर्घनानि जघनानि लतागृहेषु ।
पर्णान्तरेण संदनोदरमाविशद्भिः
पुष्पेषुकेलिकलनैकविलोलुपानाम् ॥ ४४ ॥

कस्याश्चिदङ्कनिहितां मणिवल्लकीं स्व-
कण्ठस्वरानुसरणं परिवादयन्त्याम् ।
एणास्तृणेषु विमुखा निभृतोर्ध्वकर्ण-
माकर्णयन् शशिकरैर्विशदे निकुञ्जे ॥ ४५ ॥

धुन्वत्यधिज्यमधिकं धनुरिक्षुधन्व-
न्यापूरयति त्रिविधगन्धवहे च लोधान् ।
धैर्यं विधौ धुवति धामभिरद्रिरन्ध्रे
धन्या वधूर्निधुवने विषमाववन्ध ॥ ४६ ॥

वल्गत्पयोधरमनोहरहीरहारा
व्याकीर्णमूर्धजपरिच्युतपारिजाता ।
शश्वत्कणत्कनककिङ्किणिकाञ्चि काचि-
त्कुञ्जेऽन्वभून्मदनकेलिसुखं वराङ्गी ॥ ४७ ॥

कान्तारपद्धतिषु कृत्रिमगर्तसत्व
शङ्काकलङ्कितधियः करिणः प्रवृद्धाः ।
स्थाणून्मुहुः करधृतान्भुवि निक्षिपन्तो
रात्रौ चरन्ति कलभैरनुगम्यमानाः ॥ ५२ ॥

पाटीरकोटरविनिर्गतभोगिरत्न-
ज्वालावलीकलितासु वनस्थलीषु ।
निश्चक्रमुर्न चकिता दिवसभ्रमेण
मूकाश्च घूकनिकराः क्षुधिता क्षपायाम् ॥ ५३ ॥

यावत्क्षुधा गजरिपुस्समगर्जदुच्चै-
र्भूमौ निवेश्य वदनं समुदग्रदंष्ट्रम् ।
तावद्भिया कतिपये हरिणा विशीर्णाः
पञ्चास्यपार्श्वमुपगम्य झटित्यनश्यन् ॥ ५४ ॥

शष्पाय दुर्गभुवि संविशता हरीणा
सावर्ण्यतो बत ! भिदाग्रहमन्तरेण ।
सुस्निग्धशष्पं परितश्चरदेणवृन्द
दुष्टात्मना कवलतामचिराद्यासीत् ॥ ५५ ॥

स्वस्यैव चेष्टितवशात्पिहितात्मवक्त्रः
स्निग्धीकृतैर्घृतनिपर्णचयैर्भृशान्धः ।
व्याघ्रो रुदंश्च परितः कलभाधिरूढैः
कुन्तैरघानि मृगयारसिकैः किरातैः ॥ ५६ ॥

पुच्छेन भूमिमभिहत्य रुषा, विदार्य
वक्त्रं, प्रभातरलमक्षियुगं प्रसार्य ।
द्वीपी निपत्य बत ! मृत्युरिव क्षणेन
कण्ठेऽग्रहीद्धरिणकं क्षुधितो निशीथे ॥ ५७ ॥

वृत्यावृतव्रजनिरुद्धमजार्भकाणां
स्तोमं प्रविश्य निभृतं विदिताभ्युपायः ।
रात्रावचञ्चुरदरण्यनिवासिनोऽपि
सवञ्च्य बुद्धिविभवेन शृगालवर्गः ॥ ५८ ॥

उत्प्लुत्य शश्वदभितो मसृणाङ्गणाना-
माक्रीडतां समुदयश्शशशावकानाम् ।
श्रुत्वा वृकौघविरुतं नितरां भयार्त-
स्तूर्णं व्यलीयत स्वासदनोदरेषु ॥ ५९ ॥

अप्सु प्रतप्तरजतद्रवसन्निभासु
संफुल्लनीलजलजावलिकोमलासु ।
मन्दानिलाकुलतरङ्गपरम्परासु
वाप्यां व्यहार्षुरसकृद्रमणैः करिण्यः ॥ ६० ॥

विद्वन्मनोहरतरं ललिताभिधान
सद्वृत्तरत्नमचिरन्तनभावगर्भम् ।
आचन्द्रतारकमरण्यविहारिदुर्गे ।
स्तात्कामनीयकमिदं भुवि काननस्य ॥ ६१ ॥

---

इति महामहोपाध्यायस्य श्रीकृष्णमूर्तिशास्त्रिणः पण्डितराजस्य
मद्रप्रान्तसंस्कृतास्थानकवेः कृतिषु
प्रकृतिविलासकाव्ये
काननकामनीयकनाम द्वितीयो विलासः ।



# प्रकृतिविलासकाव्ये

## पर्वतपारम्यं नाम

## तृतीयो विलासः ॥

श्रियं देयाद्वोऽधरशिखरमाश्रित्य रुचिरं
 समिद्धः श्रीलक्ष्म्या. [1]पतिरुपनिषद्वेद्यचरणः ।
अभिद्रुह्य द्वेषाद्दनुजकुलमुन्मूल्य सकलं
 जगत्क्षेमक्षामं विदधदवतीर्य क्षितितलम् ॥ १ ॥

कथङ्कारं पारम्यमहमभिदध्यां शिखरिणां
 महत्त्वैः स्थैर्यैः जगति भजतामुन्नतिमपि ।
क्षमां बिभ्राणानां सुभगतरभावैर्विलसतां
 महासत्त्वानां संस्तुतयमिशनानाश्च महताम् ॥ २ ॥

महेन्द्राख्यं क्ष्माभृत्प्रवरमयमुर्वीसुरवरः
 समारुह्य द्रष्टुं धियमधिकमानोन्नमघात् ।
महत्या श्रीमत्सुप्युक्तनिसुलभं नृत्यमतुलं
 विनिन्द्यास्या रीनो भवति सुरनार्यो सहृदयः ॥ ३ ॥

---

1. लक्ष्म्या. पति = धर्तेत्यर्थः

क्व वा वारांराशिः प्रकृतिमुखरो दुःश्रवरवैः
क्व वारण्यं गुण्येतरमृगगणाकीर्णमनिशम् ।
समुच्छ्रायं प्रांशाः क्व जगति कुलक्ष्माभृदधिपाः
क्षितेर्मातुर्मूर्ता इव च महिमानो विजयिनः ॥ ४ ॥

स्थित काम्यंश्चामीकरशिखरिसम्राड् वसुमती
तुषाराद्रिर्गौरीगुरुरतुलरत्नैकनिलयः ।
अवन्ध्यश्रीर्विन्ध्योऽविरलतरकान्तारबहुलो
महेन्द्राद्रिस्सह्यो मलयगिरिरेते बहुमताः ॥ ५ ॥

गिरिं दर्शंदर्शं भुवनमपि विस्मृत्य सपदि
द्विजस्सम्बोध्यैवं किमपि किमपि स्वैरमवदत् ।
निवेशश्शीलानां सकलमह ! वाचालयितुम-
प्यलं नेत्रानन्दाकलनकुशलोऽयं सहृदयम् ॥ ६ ॥

पक्षौ चिच्छेदाद्रिप्रवर ! तव वज्रेण मघवा
तदत्यन्तं युक्तं ह्यजनि विधिसङ्कल्पवशतः ।
चेदेवं दिव्याभरणमतुलं भारतभुवो
जगन्मातुर्देव्याः कथमिव भवेश्चिन्तय मनाक् ॥ ७ ॥

निवेशास्ते रम्यं प्रतिजनपदं विन्दति महा-
　　नरण्यैर्व्यासोऽयं त्रिविधमभिधानं श्रुतिसुखम् ।
भवत्प्रान्तग्रामानधरितवृन्दारकपुरान्
　　सुखादध्यासीना जगति खलु मर्त्याः सुकृतिनः ॥ ८ ॥

हिमाद्रिर्मूर्धानं परमकमनीयोऽनुवसति
　　स्वमप्येकं पार्श्वं क्षितिभृदुदयाख्योऽपरमपि ।
अलङ्कुर्वाते द्वावुदरमपि विन्ध्यस्स भजते
　　गरीयस्त्वात्स्वर्गादपि शतगुणं भारतभुवः ॥ ९ ॥

प्रभूत्या देदीप्ये तव मघवनीलोपलचितं
　　विचित्रैर्धातूनामवनिधर ! वर्णैस्समवलितम् ।
वपुर्ज्योतिष्मच्छ्रीसमुदयविलासैकसदनं
　　हरत्यक्ष्णोर्दृक्शक्तिं तरणिकिरणौघप्रगुणितम् ॥ १० ॥

द्रुमास्सर्वे नम्राः परिणतफलैस्ते निबिडिता
　　लतास्सर्वाः पुष्पैर्मिलदलिकदम्बैर्निचुलिताः ।
वनान्ता पाटीरद्रुमपरिमलैस्ते कवलिता
　　मनीषा द्रष्टॄणामचल ! तव नृणां पुलकिताः ॥ ११ ॥

असामान्यं शैलाधिप ! वसुमतीत्वं प्रकटय-
स्यनन्तायास्तुङ्गावयवपदमाश्रित्य विशदम् ।
जगज्जीवातूनां शरणमसि मुख्यं जलमुचां
क्षितेरुद्भूता त्वं परमरमणीया परिणतिः ॥ १२ ॥

सरिच्छ्रेण्यः कामं पतनकमनीया नयनयो-
र्दरीभ्यस्स्यन्दिन्यो रुचिरवरहीरस्रगुपमाः ।
भुवो देव्याः पीनस्तनभरधुरां भूरि दधत-
परिष्कुर्वन्त्यद्रीन्सरसतरपाटीरसुरभीन् ॥ १३ ॥

वसानेव स्निग्धं हरितरुचि वासो विलससि
मरुद्भैस्त्वव्यपेतरविटपिवीरुत्समुदयैः ।
प्रसूनैरुत्फुल्लैर्हृदयहरवर्णैरिव मणि-
प्रभेदैराकल्पं कलयसि च माले ! शिखरिणाम् ॥ १४ ॥

समुत्तुङ्गे शृङ्गे समुपचितकार्पासरुचयः
चरन्तः स्वच्छन्दं विपरिणतिमाप्त्वा बहुविधाम् ।
तवोष्णीषायन्ते सचल ! करिचर्माम्बरशिर-
स्सरित्स्रोतस्यन्तेयान्भृशमुपहसन्तस्सितघनाः ॥ १५ ॥

परिष्कुर्वत्यच्चैस्तटभुवमुदग्रोर्मिमुखरा-
मरण्यानी कामं तव चरणसेवाप्रणयिनी ।
स्फुरत्सत्त्वोद्रेकं हरिहयमनोह्लादनपरं
वृणीते त्वां विश्वम्भरमिव हि लक्ष्मीरनिरतम् ॥ १६ ॥

अनुद्भूतात्मानः प्रथममथ गण्डोपलपथ-
क्षरद्धाराकाराश्चदनु तनुकुल्याकृतिजुषः ।
विनिष्क्रामन्त्योऽद्रेर्विवरनिकरात्पातमुखराः
क्रमात्संवर्ध्य क्ष्मां जलधिमुपगच्छन्ति सरितः ॥ १७ ॥

ध्रुवं कृत्वा पुष्णन्दुहितृभिरसद्ध्याभिरनिशं
समर्प्यैताः पत्ये महितविभवायाम्बुनिधये ।
प्रशान्तात्मा विश्राम्यसि तटमधिष्ठाय जलधे-
र्महान्तस्तात्स्थ्य न हि जहति निर्वर्त्य भविकम् ॥ १८ ॥

न वेदायं स्वीयाम्युदयचयमूलं सलिलधि-
र्यदार्ये नेदिष्ठं न गणयति रात्रिन्दिवमपि ।
अमर्यादं शब्दायत इति जहीहि क्रुधमिमां
क्षमाहीनो नेव ध्रुवपदमध्यासितुमलम् ॥ १९ ॥

समुद्रः प्रत्यग्रैर्मुदिरनिकरैर्वर्धयति ते
गभीरं कान्तारं द्विरदमुखहिंस्रैः परिवृतम् ।
दरीद्वारस्फारारवमुखरवारां गिरिसरि-
द्वराणां वाराशि त्वमपि निवहैः प्लावयसि तम् ॥ २० ॥

प्ररूढास्त्वय्यद्रे ! फलभरविनम्रा द्रुमवराः
परिष्वक्ताः पुष्पद्व्रततिभिरुदञ्चत्कलरवाः ।
हरन्तः श्रान्तिं द्राङ्मलयमरुदाधूतविटपा
वितीर्यात्मच्छायां सकरुणमवन्ति श्रितवतः ॥ २१ ॥

धनायान्धाः कामोपहतमतयो द्वेषकलुषा
महारोगग्रस्तास्सततमपमृत्युप्रणयिनः ।
अविश्रांस सत्यं विहितपरहिंसाभिरुचयः
कथं सौभाग्यं तेऽमितमनुभवेयुः पुरनराः ॥ २२ ॥

अमोघैर्द्रव्यौघैः सदनशतमभ्रङ्कषशिरो-
गृहमेह्यञ्चितध्वजपटलरोचिष्णु रचितम् ।
अधिपस्यं तेऽद्रिपवर ! वसुभूमिरनिशं
रमन्तोऽप्यासीना विषयसुखलोभेन धनिनः ॥ २३ ॥

समीरे पाटीरद्रुमपरिमलोद्गारचतुरे
कुमुद्वत्याश्लेषङ्कलयति कलानामधिपतौ ।
अधिज्यं प्रद्युम्ने धनुरधिकमाधून्वति मुहु-
र्व्यथां हृद्यां काञ्चिद्युवजनमनांसि द्रुतमधुः ॥ २४ ॥

चिरादाकाङ्क्षन्तीमति[1]बलवशामप्यवसरं
विजानन्नोलम्ब ! त्वमनुभव कामं कुसुमिताम् ।
इमां वल्लीं स्निग्धामिति मदिरनेत्रा विलसितै-
रपश्यन्तीनान्यं सरणममणत्काप्युपवने ॥ २५ ॥

उदञ्चद्भूवल्लिः प्रणयकलहेन प्रियतमे
परिष्वङ्गं कुर्वत्यनुनयवचोभिः सरभसम् ।
परं संगन्ताना स्तनयुगलसङ्घर्षणसुखं
दर्शनराजिश्रेव निधकरसुधे कापि तरुणी ॥ २६ ॥

स्मरार्तां प्राणेशं निरमधरपानैकरसिकं
निवार्य द्राक्पार्थांकनिजमुखाब्जेन चतुरा ।
सहासं प्रोवाच " स्पृशसि यदि नीवीं त्वमधुना
विदध्यां शिक्षां ते नियतमि"ति काचिद्वरतनुः ॥ २७ ॥

---

1. अतिबलो = वायु ।

कबर्याः स्निग्धाया ग्रथनमिषतः कापि युवतिः
कथञ्चिद्विस्रंस्य स्वयमुपरिवासोऽत्रसदृशम् ।
मुहुर्बाहूत्क्षेपैस्तरुणतरमेकं वशयितुं
व्यनक्ति सामूलं पृथुलनिजवक्षोजयुगळम् ॥ २८ ॥

समुत्क्षिप्य क्षौमं विहरति मरुत्येकपुतनू-
रुदग्रभ्रमङ्गं स्तनयुगसमाच्छादनविधिम् ।
पुरो यूनः कस्याप्यसकृदभिनिन्येऽपि तु परं
व्यभातामूरू द्वौ मदनविजयस्तम्भसदृशौ ॥ २९ ॥

अदर्शः किं ? कामोपम ! मम पतिं पर्वतभुवि
प्रवासी नायास्यत्यचिरमथवा यामि सदनम् ।
ब्रुवाणेत्थं नैवोदचलदसकृद्वीक्ष्य कमपि
सनिःश्वासोत्कम्पस्तनयुगविनम्रैकरमणी ॥ ३० ॥

निकुञ्जानां पुञ्जा भ्रमरनिकुरुम्बैर्निबिडिता
द्विजैर्नानावर्णैः श्रुतिमधुरगीतैश्च मुदिते. ।
अजस्रं कस्यायाः स्रवदुदकधारार्द्रितपदा
गुहाद्वाराण्यद्रिप्रवर ! भवदीयाः विदधते ॥ ३१ ॥

गुहागेहं मत्तद्विपशतपृथग्भिन्यत्यनुगुणं
  लताकुञ्जोदञ्चत्सुमममपि धीरैकसुगमम् ।
प्रतिध्वानैर्भीतिप्रदमजगरैरद्रिसदृशैः
  सरित्स्रोतःपातैर्मुखरमधितिष्ठन्ति दरयः[1] ॥ ३२ ॥

सरो रम्यं हंसावलिदलितराजीवमभितः
  परित्यक्ता वेद्यः फलभरविनम्रद्रुविटपैः ।
समुत्प्लुत्य स्वैरं हरिणपृथुकानां विहरतां
  गणैः पूर्णा राजन्त्यधिगिरिगुहाभ्यन्तरधरम् ॥ ३३ ॥

पृथक्सम्यास्तूर्ध्वं, त्वयि भृशमसक्तानिव सतः
  समेषां तत्त्वानामनुपविशदिभ्रान्तिमसकृत् ।
समीक्ष्य मार्गेषात्र शिखरिराज ! ध्रुवमिमे
  निपत्याधोरन्ध्रा किमिति मतिमाविभ्रति जनाः ॥ ३४ ॥

महौषध्यो यद्वद् कटकभुवि रुद्रास्तव गिरे !
  जरामृत्युव्याधिप्रशमनसमर्थप्रकृतयः ।
न बुध्येरन्सर्वे परमपि तु पारम्यमवनौ
  ध्रुवं तासां, पंडितस इव महान्तः कतिपये ॥ ३५ ॥

1. दरय. = भिल्ल

महीध्रप्रस्पर्धिस्तनवनसुमस्तबसुमधुराः  
शबर्यः पर्याप्तं सुरतसुखमश्नन्ति निभृतम् ।  
ततं नक्तं ज्योतिर्व्रततितितिविद्राविततमः-  
प्रचारं त्वद्गन्धोदरगृहमुपाश्रित्य दयितैः ॥ ३६ ॥

स्फुरद्रत्नोद्रिक्तद्युतिनिकरपूराङ्कुरहरि-  
त्समुत्नम्रक्रूरोरगवरशिरःकम्रशिखराः ।  
पटीराः कान्तारोदरतिमिरसंहारचतुराः  
सदा दीपस्तम्भश्रियमचल ! बिभ्रत्यनुपमाम् ॥ ३७ ॥

समावृत्य स्कन्धैरजगरशरीरोरुगुरुभि-  
र्भृशं द्राधीयोभिः सविषमुपयातान्वनमृगान् ।  
ग्रसन्ते मांसाशाः कतिचन महान्तः क्षितिरुहाः  
परीता दुर्दर्शैश्शिखरिभिरिवास्त्नां समुदयैः ॥ ३८ ॥

उदग्रक्षुत्क्षामाः कतिचन तरक्षुप्रभृतयः  
स्फुलिङ्गानक्षिभ्योऽसकृदिव वमन्तोऽमितरुषा ।  
निशीथिन्यां सत्त्वा विपिनभुवि निर्वर्त्य मृगयां  
स्वपन्त्यह्नि च्छायाद्रुमतरुनविश्रित्य निभृतम् ॥ ३९ ॥

कचिच्छुभ्रैरभ्रैः क्वचन परिपिङ्गव्रततिभि-
हिमाद्रिं हेमाद्रिं युगपदनुकर्तुं प्रभवसि ।
अरण्यान्या वन्ध्यं कलयसि च विन्ध्यावनिधरं
त्वदीयं सौन्दर्यं विलसति हि दूरे कविगिराम् ॥ ४४ ॥

महत्याः पङ्क्त्यास्ते बहुविषयविश्रान्तवपुषः
प्रथन्ते [I]विच्छेदाद् द्विपनियुतदघ्नावटतटाः।
अधस्ताद्द्रष्टॄणां सपदि बत! मूर्धभ्रमकृतो
दधानास्शार्दूलैः परिवृतमरण्यं धृतिहरम् ॥ ४५ ॥

किरञ्ज्योत्स्नासारानुपरि तव निष्सरजत-
द्रवस्रोतःकल्पानमृतकिरणोऽयं निजकरैः ।
प्रकृत्या श्रीमन्तं कलयति भवन्तं शिवगिरे-
रखर्वं गर्वं द्राग्दलयितुमयत्नेन चतुरम् ॥ ४६ ॥

निरुन्धानं वर्त्म त्वदवयवमेकं शिखरिणं
विदार्य द्राघिष्ठं निरमिमत [II]रन्ध्रं कतिपये ।
भजन्त्येतेन श्रीफणिपतिपुरं धूमशकटाः
क्षमाभृत्त्वं दुष्टत्स्वपि बत! विमुक्तं न भवता ॥ ४७ ॥

---

I. Gap. II Tunnel.

क्षमामाश्रिभ्राणा अपि मृगचलोद्विग्नहृदया-
श्चरन्तस्सत्पक्षैरुपरि पथि शाखापणयिभिः ।
द्विजास्सम्भूयोच्चैश्शिखरमधिरोहन्ति सुधियो
भवेत्तपायैर्वयं यदि, जगति किं वा न सुलभम् ॥ ४८ ॥

द्विजा मूर्धनि ते क्षितिधर ! डयन्तेऽथ परितः
सविन्धानं भिन्दानमिव द्विजगर्भाण्डसुभगम् ।
सजातीयानस्मानिह भुवि विसृज्य द्रुततरं
सदान्योन्यद्रोहप्रमितमतयो हि द्विजनयः ॥ ४९ ॥

अगस्त्यात्पश्येयं यदि शिखरमारुह्य परितो
निम्नर्निर्गायान्ते जलधिरपि नीलाम्बरणवत् ।
तथा दीर्घैरेभ्रः प्रवरमभितो भूमिफलके
कृता यत्राकारा द्रुतरजतरेखा इव गिरे ! ॥ ५० ॥

प्रकल्पन्ते हिंस्रा अपि विपिनसत्वा बहुविधाः
परिष्कारायैव प्रबलतिमयोऽब्धेरिव गिरे।
यदीमाश्राव्यास्त्व जगति न हि भव्यं जनिमतां
सतां रक्षारीतिर्विलसति हि लोकोत्तरतरा ॥ ९२ ॥

अभीक्ष्णं संरक्षा निरुपमकृपस्त्व तनुभृता
सरिद्भिः पुण्याभिर्विदधदवनीभृत्परिवृढ ।
श्रितानामानन्द जनयसितरामत्र तु वयं
विचार्याप्याश्चर्यं मनसि कलयामो न किमपि ॥ ९३ ॥

विशीर्णाना श्रीणां प्रतिसुभगभावं समुदयः
समिन्धानां फल्ग्र. श्रयति परिणम्रस्तव तनुम् ।
अखर्वं त्व गर्वं धरसि यदि दुर्व्येन च तत.
प्रकाशं किं वह्ने. स्थगयितुमलं धूमपटलः ॥ ९४ ॥

निवेद्य स्वोच्छिष्टं फलसमुदयं भक्त्यनिशाया-
ज्जगद्वन्द्याय श्रीरघुपरिवृढायातिजरठा ।
परां मुक्तिं प्रापन्मुनिवरदुरापां सपदि या
तवाध्यासाच्चक्रे गिरिवर ! वनं सापि शबरी ॥ ९५ ॥

समुत्तुङ्गे शृङ्गे तव समधिरुह्यानिलसुतः
पुरं लक्ष्यीकुर्वन्दशवदनदोर्भिस्समवितम् ।
अकूपारं तीर्त्वा जनकतनुजानन्दमकरो-
त्तदङ्घ्रिस्पर्शेन त्वमपि कृतकृत्यस्सममवः ॥ ५६ ॥

भवत्प्रत्यन्तोर्वीधरपरिसरारण्यमनिशं
परिष्कुर्वन्शास्ता हरिहरसुतस्सर्वजगताम् ।
चिरस्य स्वग्रामानवति करुणापाङ्गवलनै-
स्त्वमेवैको भाग्यं परमिदमलब्धाद्रिषस्वपि ॥ ५७ ॥

पुरा विन्ध्याद्रिं यः स्वमहिमविशेषान्न्यगकरो-
त्क्षुधा वातापिं यो जठरदहने दैत्यमजुहोत् ।
अगस्त्यः सोऽपि त्वां सततमधिशेते मुनिगणै-
रहो ! माहात्म्यं ते जगति गदितुं कः प्रभवति ॥ ५८ ॥

मया दृष्टा सीतेत्यनिलसुतवाक्यश्रवणतः
कपीन्द्रा मायन्तो दधिमुखमनादृत्य तरसा ।
बभञ्जुः स्वैरं यत्त्वयि सममवत्तन्मधुवनं
प्रसिद्धिः पौराणिक्यहह ! भवतोऽद्रे ! विजयते ॥ ५९ ॥

महेन्द्राद्रे ! हृद्यैरमलवलभिन्नीलमणिभि-
क्वचित्पुञ्जीभूतैरिव विरचिता ते तनुरियम् ।
समुद्दीप्ता श्रीमद्दिनकरकराणां व्यतिकरा-
दहो ! स्पर्धां बध्नात्यतिसुभगवैकुण्ठवपुषा ॥ ६० ॥

चिरं कृत्वा पुण्यामवनिमचलेन्द्राच्युत इव
प्रतिष्ठां सम्प्राप्य त्वमिह विजयेथास्स्थिरतराम् ।
व्रजाम्यर्चां कर्तुं मलयमनिलस्य प्रभवतो
भुवि स्तादाकल्पं मम शिखरिपारम्यमनघम् ॥ ६१ ॥

---

इति महामहोपाध्यायस्य श्रीकृष्णमूर्तिशास्त्रिणः पण्डितराजस्य
मद्रप्रान्तसंस्कृतास्थानकवेः कृतिषु
प्रकृतिविलासकाव्ये
पर्वतपारम्यनाम तृतीयो विलासः ।



निखिलजगतां मुख्यः प्राणः परा ह्यसि देवता
श्रुतिरपि भवतत्त्वं वक्तुं बिभेति सुदुर्महम् ।
कथमिव जडः शक्तः स्तोतुं भवन्तमहं विभुं
पृथुकभणितं श्रुत्वैतत्त्वं प्रसीद पितोपमः ॥ ४ ॥

समधिकबलस्त्वं भूतानां समीर! विराजसे
भवदभिमते मार्गे तानि प्रवर्तयसि द्रुतम् ।
अतिशयितुमुत्सह्यान्यस्त्वां प्रभुः क इह क्षितौ
प्रकृतिवशगोऽप्येको लोके पराक्रमसे स्वयम् ॥ ५ ॥

भ्रमति सततं पृथ्वीगोलं सशैलवनं मह-
द्दिवसकृदुदेत्यस्तं याति क्षपास्वपि चन्द्रमाः ।
सलिलनिधयोऽप्यूर्मिक्षोभैश्चलन्ति, शिखी ज्वल-
त्यखिलमपि ते लीलामात्रं समीर! विदुर्बुधाः ॥ ६ ॥

किमिह वचसां गुम्फैस्त्वत्स्तुतय[1]द्व्यसं विभो!
जगदखिलमप्याविष्टं स त्वयैव विचेष्टते ।
वहसि यदधीकारं कृत्स्नं महेश्वरतः प्रति
प्रकृतिवशगं भूतं सर्वं त्वयैव नियन्त्रितम् ॥ ७ ॥

---

1. प्रलम्भात्मार्थे द्व्यसच्

विपरिणमयस्याद्यं भूतत्रयं बहुधा सकृ-
न्न वियति परं नीरूपेऽस्मिन्पराक्रमसे मरुत् ! ।
किमपि न भवान् शक्तः कर्तुं प्रभौ त्वदपि ध्रुवं
दधति बहवः स्वाधीकारं विशिष्य तपस्विषु ॥ ८ ॥

किमपि किमपि स्वैरङ्कुर्वन्नवीनकलाङ्गतो
विहरसि सदा द्यावाभूम्योरमन्दकुतूहलात् ।
चिरसुचरितैरुद्भूतस्त्वं क्रमात्परिपोषितः
शिशुरिव तयोः प्राणेभ्योऽपि प्रियोऽसि सदागते ॥ ९ ॥

अमितवसतिं धरित्री ते ददाति समादरा-
त्त्वमपि विहरन्नत्यन्ताय प्रहर्षभरान्वितः ।
उडुसमुदयैर्मुक्ताकल्पैरलङ्कुरुषे च तां
जयति युवयोर्योगः स्निग्धः परस्पररागतः ॥ १० ॥

तरणिकिरणानारूणत्रानः प्रचण्डतरं भ्रम-
न्घटयसि घनांस्तूर्णं कौतस्कुतानचलोपमान् ।
सरभसममून्वर्षय्यमान्मुहुः परिगर्जत-
सपदि विभजन्नन्तर्धत्से स्वयं कृतकृत्यवत् ॥ ११ ॥

जलदपटलाः संलक्ष्यन्ते त्वया हि समाहृताः
खगमृगनराकाराः केचित्प्रतिक्षणभेदतः ।
कनकशिखरिप्रख्याः सायन्तनातपदीपिता
हरगिरिनिभाश्चान्ये केचित्तमालवनोपमाः ॥ १२ ॥

अनतिकुटिलं रत्नस्तम्भमिव दधदायतं
यदतिसुभगं चित्रैर्वर्णैर्धनुर्गगनान्तरे ।
तदपि नियतं चक्षुःप्रीत्यै त्वया विहितो महा-
न्प्रसदनपरीपाकोऽस्माकं मरुत् ! पृथिवीजुषाम् ॥ १३ ॥

नयनहरणप्रमोदमक्षणस्फुरणाचित-
प्रततहरितो विद्युत्पुञ्जान्पुरः परिदर्शयन् ।
सहमवमपि ध्वानं पश्चाच्छ्रुतौ विनिवेशय-
न्नवजलधरैरसिञ्चस्त्वुर्वीं जगद्धितकाम्यया ॥ १४ ॥

वियति वितते विष्वद्रीचो वलक्षतर[1]क्षैरु-
भ्यनसमुदयानद्भिर्वार्धेः प्रपूर्य रवेः करैः ।
नुदसि सहसा लोकस्थित्यै करीन्द्रकरोपमं
कल्पयितुममून्धारापातं समीर ! समन्ततः ॥ १५ ॥

---

1. क्षैरु = मरुत्.।

सरिदधिपतौ ह्यास्यं पुष्णत्रसं परिवर्धसे
यदयममितैस्तुङ्गैर्भङ्गैस्त्वयैव विकारितः ।
ह्रियमपि विहायैवं शब्दाग्रटङ्गुतिदुःश्रवा-
न्नर इव महाभूताविष्टः सदा परिनृत्यति ॥ १६ ॥

कृतपरिकरो रत्नान्यब्धेरवातुमयन्तना-
न्यनिल ! सुचिरं पारे वारीण्यमन्दरयङ्गिरन् ।
न किमपि ततोऽलब्धा ह्यन्ते, जहाहि परिश्रमं
जगति मतिमान् को वा कालं वृथैव निनीषति ॥ १७ ॥

क्षितिगगनयोः सम्पत्तोमैश्चिरं परिपोषणे
जलनिधिमृते नान्यत्किञ्चित् समस्ति च साधनम् ।
इति खलु विनिश्चिन्वानस्त्वं तयोरिव मध्यग-
स्तमुपगतवान्प्रेम्णा, नक्तन्दिवं विजिहीर्षसि ॥ १८ ॥

वलभिदुपलाद्रीन्द्रश्रीभृत्तरङ्गपरम्परा-
विरचनकलावैदग्ध्यावर्जिताखिलमानसः ।
मुहुरमितैर्ह्रैश्चैस्तन्वत्रसं परमाद्भुत
चरसि विरुवन्नावेद्रिकातसमुद्रमधिश्रितः ॥ १९ ॥

क्वचितवियत्प्रान्तमेऽद्घटित्त्वदरुन्तुद-
स्तनितजनितप्रत्युच्चण्डध्वनिक्षितिभृद्गुहान् ।
प्रकृतिमधुरान्प्रत्यब्धार्धेस्तटानटवीभृतो
नटनममितं रङ्गीकर्तुं पटु प्रकट तव ॥ २० ॥

गमयसि तनूर्नावो डोलावदीपदुदञ्चय-
न्नुपरि चलतामूर्म्यद्रीणां निजोर्ध्वलसत्कटाः ।
प्रकृतिरसिकास्त्वरुपे मत्यां वितीर्य तदातरं
गमितुमुदधौ किञ्चिद् दूरं भवन्ति समुत्सुकाः ॥ २१ ॥

कतिचन महानावो यन्त्रैर्व्रजन्ति पुरोपमा
भवदुपकृतिर्यद्यप्यासां प्रभञ्जन ! मैव भूत् ।
त्यज मतिमथाप्येतां झञ्झामरुन्विनिमज्जने
न खलु जनयेदौदासीन्यं मदश्चपलात्मनाम् ॥ २२ ॥

क्षुदुपहतये त्वामास्वाद्य प्रयन्तु भुजङ्गमा
न किमपि ततश्छिन्न मा गा व्यथां मलयानिल ।
यदतिकुटिला दोषांशांस्ते लिहन्ति कुतूहला-
द्वृजिनहरणे दुष्टात्मानो भवन्ति सतां मताः ॥ २३ ॥

मलयपवन ! स्पर्शैस्तन्वन्मुखं मधुचन्द्रमः-
प्रभृतिषु भृशं स्निह्यन्साकं वहत्स्वमितं तव ।
विकृतिमधिकां चेतस्स्वेणीदृशां चपलालना-
मभिनिविशसे प्रद्युम्नस्य प्रभोः सचिवोत्तमः ॥ २४ ॥

कुसुमसुभगाः स्तोकं नम्राः फलैश्च पचेलिमै
रसिकमधुपाम्वाया रागश्रिया हृदयङ्गमाः ।
मृदुलपुलिनाभोगान्प्राप्ता भृशं प्रियदर्शनाः
कनकलतिकाः कूले सिन्धोर्धिनोषि समीरण ॥ २५ ॥

स्तनतटलुठत्सूक्ष्मक्षौमप्रतिक्षणकर्षण-
प्रमथसुभगाकोशभ्राम्यद्भृगन्तसमञ्चितः ।
नगररमणीर्गाढं प्रेम्णा परिष्वजसेऽम्बुधौ
पवन ! भवतः सेवां कर्तुं स्वयं समुपागताः ॥ २६ ॥

कचभरमधुद्रग्रन्थे तन्व्याः करौ विनिवेशयन्
श्लथयसि शनैः श्लक्ष्णं वासः स्वनन्मणिमेखलम् ।
पृथुलजघना मुग्धा किञ्चिन्निगदा मृदु स्वयं
पुलिनमधरीकुर्वाणेव ह्रिया हि निषीदति ॥ २७ ॥

सरसिजमुखै पुष्पै फुल्लैर्दिवा समलङ्कृता
प्रकृतिवनिता नक्तं जामत्सुमै कुमुदादिभि ।
ललितललितैर्नृत्यैर्नित्य मनोहरिणी प्रिया
रमयसि वने गाढाश्लेषै समीरण ! कामुकीम् ॥ २८ ॥

वरतनुशतै रक्तै स्वैर विहर्तुमनर्गळा
मधिकृनिमिमा रुन्धा को वा तनातिमनोहराम् ।
अभिनवसुमप्राग्भारास्त्व लता निधुवन्चला-
दनिल ! भुवि न ह्यारामेणाभिनै प्रतिषिध्यसे ॥ २९ ॥

भृशरयवशोदञ्चत्फेना कळिन्दगिरीन्द्रजा
शिखरिणि यदि स्यन्देतोर्म्युद्गमैस्मिकनामये ।
अधरयति ता लक्ष्मीं वेणी त्वया शिथिलीकृता
विकचकुटजा तन्वङ्गाया नितम्बविलम्बिनी ॥ ॥ ३० ॥

शमयसि दृशामाशा पातु प्रभञ्जन ! जृम्भिता
सरिदधिपतेस्तीरे यूना भवत्प्रियकान्तणाग्र ।
असुलभतरै स्त्रीणामङ्गैर्मुहु स्फुटताङ्गतै
श्रितजनमन प्रीत्याधानं वदान्यतुलस्तनम् ॥ ३१ ॥

कुवलयदृश. श्यामा हर्म्यस्थलैकनिवासिनी-
स्सुरतविरतौ श्रान्ता वातायनैर्विवृतैर्भजन् ।
कुसुममृदुळान्यङ्गानि द्राक् सुख परिमृज्य च
श्रममपनुदस्तासा, निद्रा ददास्यनुकम्पया ॥ ३२ ॥

नृपदुहितर प्रत्याचख्यु पुरा भवदर्थना
कतिचन, तदा क्रुध्यंस्ताभ्यस्तनूर्हि बभञ्जिथ ।
किमिदमुचित ? राजर्षिस्त्वा पितापि स चक्षमे
विनयविधुरा माद्येषु खल्वखण्डितवृत्तय ॥ ३३ ॥

ध्वजपटसमाः क्षौमी स्त्रीणा समीरण ! मन्यसे
त्यज धियमिमा क्षुद्रा साध्व्यो भवन्ति सहस्रशः ।
तव पुनरिद सम्मन्वीरन्न तास्तु निचेष्टित
श्रियमपहरेत्यानिन्द्य प्रधर्षितमञ्जसा ॥ ३४ ॥

किमपि पुरपे नैत्राऽऽनम्राग्रशरान्मृदु सस्पृश-
न्विटपिनिरहाग्नैवम्भूतान्निपातयसि क्षणात् ।
स्वयमविनयं धत्से स्त्रैणे द्विदण्डविधु परा-
स खलु सहते स्त्रीष दोष परत्र सुधीरपि ॥ ३५ ॥

भुवनमहितौ शौर्याम्भोधी सुतौ त्वमजीजनो
निशिचरकुलान्युन्मूल्यैकस्तयोर्भुवि पप्रथे ।
कुरुसुतशतस्यासीदन्यो यमः स वृकोदरो
पवन ! समुदभूत्ताहग्वीरो न कोऽपि सुरेष्वपि ॥ ३६ ॥

परिणतफलभ्रान्त्योत्सुक्यादग्रहीदुदितं रविं
जननसमये त्वत्पुत्रो द्राक् पराक्रमशेवधिः ।
पवन ! पविनाऽऽजघ्ने शक्रः सुपर्वभिरर्थितः
शिशुरपि गुरुर्धाम्ना, यस्माददामि बलद्विषा ॥ ३७ ॥

प्रियसुतमभिद्रुह्यास्तु द्राक्सुसंहृतवृत्तिको
न्यविशत भवान्क्रुद्धोऽत्यन्तं महीधरकन्दरे ।
अदधत सुराः प्रेतावस्थां निरुच्छ्वसितास्ततः
समनुनयतो ब्रह्मादीनां समान् समजीवयः ॥ ३८ ॥

दशमुखगृहेष्वन्विच्छञ्श्रीरघूत्तमभामिनीं
वरमृगदृशः सुप्ता हन्त ! त्वयैव निवस्त्रिताः ।
व्यकुरुत मनागप्युद्वीक्ष्य स्वयं न हि ते सुतः
कपिरपि महामान्योऽद्धिक्षद्यतस्तव पद्धतिम् ॥ ३९ ॥

भुजगपतिना मूर्ध्नैकेन श्रमादपिधाय च
प्रधृतमपि ते शक्त्या शृङ्गं गिरेः समचाल्यः ।
दिवि भुवि भवत्कल्पो नान्यः प्रकम्पन ! किन्त्वहं
विनयमधुरं वीर्यन्नास्ति त्वयीति सुहृद् ब्रुवे ॥ ४० ॥

श्रमभरमपाकुर्वञ्छायाद्रुमैर्मृदुकम्पितैः
परिणतफलैः स्वादैर्निघ्नन्क्षुधं भुवि पातितैः ।
सरससलिलैस्तृष्णां मुष्णन्सरित्सरसीसुतै-
श्चरसि पवनातिथ्यं हृद्यं वनान्तमुपेयुषाम् ॥ ४१ ॥

असमकुसुमामोदैर्घ्राणं सदा परितर्पय-
ञ्शिशिरपृषतानम्भोजिन्याश्शनैः परितः किरन् ।
क्लममपि समं दूरे कुर्वन्स्पृश-सुखमादरा-
दनिल ! कलयन्नाह्लादं न समर्हणमर्हसि ॥ ४२ ॥

क्वचन समये बातावेशो मनसि वनस्पती-
न्कुसुमितलताश्लेषाद्रम्यानुपघ्नतरानपि ।
अतिबल ! कथं शृङ्गारी सन्निदं न विबुध्यसे
विमृश वृजिनं दाम्पत्यस्य च्छिदा जनयेन्न किम् ॥ ४३ ॥

द्विरदसदृशा गण्डाश्मानो भवन्ति दरस्पृशो
निजबलपरिज्ञाने यत्नं त्वमेष्वपि मा कृथाः ।
यदि वितनुया ग्रामा न स्युर्महीध्रपदाश्रिताः
सपदि विपदः सूते दर्पोद्धतस्य विचेष्टितम् ॥ ४४ ॥

कति विनिरमाः संवर्तास्त्वं प्रकम्पन ! वेद को
न जहति पुनस्संस्कारास्त्वां चिरानुभवाहिताः ।
त्वमसि रसिको यद्भावानां विपर्यसने भृशं
पुलिनमभवत्स्रोतो, दृष्टस्तथैव विपर्ययः ॥ ४५ ॥

वनमुदभवत्क्वाप्य भव्यं दृशोः क्वचन द्रुमैः
क्वचन सिकताकान्तारो द्राक्पिधाय महाटवीम् ।
तदिदमखिलं त्वत्कृत्यं हि व्यनक्ति विशेषतः
सकलजगतामीशस्यान्तर्नियामकतां मुहुः ॥ ४६ ॥

विभुरपि भवान्प्राणाद्यात्मा शरीरिषु चेष्टसे
प्रतिनिधिपदं प्रेमस्थानं वहन्परमात्मनः ।
त्वयि सति परो जीवस्तिष्ठत्यपैति विपर्यये
करणनिवहैः कार्यैर्वान्यैः फलं न हि केवलैः ॥ ४७ ॥

लवणमिलनाद्गुणयो मुष्णन्रुजां त्रिविधां नृणां
निरुपमकृपः पारावारप्रदेशमुपेयुषाम् ।
शिलरिशिखरे सौख्यं पुष्णन्महौषधिमिश्रणा-
द्वितकृदगदङ्कारो भासि प्रकृत्युपकल्पितः ॥ ४८ ॥

नगरमनुजा मिष्टान्नैरप्यपुष्टकळेबरा
विपिनभवना वृद्धाः स्वैरं चरन्ति युवोपमाः ।
प्रकृतिशुचिरस्या[1]लब्धायुर्ददासि वने सतां
पुरनरदुराचारैर्दुष्टो यमाय हि कल्पसे ॥ ४९ ॥

श्वसन ! सुखिनस्तिर्यञ्चोऽपि ह्यरण्यनिवासिनः
किमधिकगिरा त्वामासेव्य द्रुमा अपि निर्मलम् ।
स्वसुखविमुखा मर्त्यास्त्वेते कुतर्कशतप्रिया
न जहति पुरं प्राणापायेऽप्यधर्मपरायणाः ॥ ५० ॥

सुखवसतये शान्तप्रान्तान्वनान्तमुखान् शुभा-
न्निरवधिघृणापूर्णोऽस्मभ्यं वितीय जगत्प्रभुः ।
न्ययमयदमुं त्वां नस्त्रातुं, विवेकलवोज्झिताः
पतितुमवटं ह्यन्विच्छामः स्वयं प्रकृतिद्विषः ॥ ५१ ॥

---

1. अलब्धमपि अलब्धमप्ययम् ।

द्विरदसदृशा गण्डाश्मानो भवन्ति दरस्पृशो
निजबलपरिज्ञाने यत्नं त्वमेष्वपि मा कृथाः ।
यदि वितनुया भामा न स्युर्महीध्रपदाश्रिताः
सपदि विपदः सूते दर्पोद्धतस्य विचेष्टितम् ॥ ४४ ॥

कति विनिरमाः संवर्तास्त्वं प्रकम्पन ! वेद को
न अहनि पुनस्संस्कारास्त्वां चिरानुभवाहिताः ।
त्वमसि रसिको यद्भावानां विपर्यसने भृशं
पुलिनमभवत्स्रोतो, दृष्टस्तथैवं विपर्ययः ॥ ४५ ॥

वनमुदभवन्नव्यं भव्यं दृशोः क्वचन द्रुमैः
क्वचन सिकताकान्तारो द्राविपधाय महाटवीम् ।
तदिदमखिलं त्वत्कृत्यं हि व्यनक्ति विशेषतः
सकलजगतामीशस्यान्तर्नियामकतां मुहुः ॥ ४६ ॥

त्रिभुरपि भवान्प्राणाद्यात्मा शरीरिषु चेष्टसे
प्रतिनिधिपदं प्रेमस्थानं वहन्परमात्मनः ।
त्वयि सति परो जीवस्तिष्ठत्यपैति विपर्यये
करणनिवहैः कार्यैर्वान्यैः फलं न हि केवलैः ॥ ४७ ॥

लवणमिलनाद्गुण्यो मुष्णन्रुजां त्रिविधां नृणां
निरुपमकृपः पारावारप्रदेशमुपेयुषाम् ।
शिखरिशिखरे सौख्यं पुष्णन्महौषधिमिश्रणा-
द्धितकृदगदङ्कारो भासि प्रकृत्युपकल्पितः ॥ ४८ ॥

नगरमनुजा मिष्टान्नैरप्यपुष्टकळेवरा
विपिनभवना वृद्धाः स्वैरं चरन्ति युवोपमाः ।
प्रकृतिशुचिरस्या[1]तश्चायुर्ददासि वने सतां
पुरनरदुराचारैर्दुष्टो यमाय हि कल्पसे ॥ ४९ ॥

श्वसन ! सुखिनस्तिर्यञ्चोऽपि ह्यरण्यनिवासिनः
किमधिकगिरा त्वामासेव्य द्रुमा अपि निर्मलम् ।
स्वसुखविमुखा मर्त्यास्त्वेते कुतर्कशतप्रिया
न जहति पुरं प्राणापायेऽप्यधर्मपरायणाः ॥ ५० ॥

सुखवसतये शान्तप्रान्तान्वनान्तसुखान् शुभा-
न्निरवधिघृणापूर्णोऽस्मभ्यं वितीय जगत्प्रभुः ।
न्ययमयदमुं त्वां नस्त्रातुं, विवेककलोज्झिताः
पतितुमवटं ह्यन्विच्छामः स्वयं प्रकृतिद्विषः ॥ ५१ ॥

---

1. अतइत्ययं आतइत्यव्ययम् ।

विपुलसिकतारण्यप्रान्ते बहिर्भरतक्षितेर्दधति विरळान्खर्जूरद्रून्दुरापजलाशये ।
समधिकमरैरारुह्योष्ट्रान्सदा व्रजतो जनान्सपदि पिदधास्युत्कीर्णैस्तं प्रभञ्जन ! पांसुभिः ॥ ९२ ॥

अवनिजठरामोगोदीर्णप्रणालिकयोद्गतः
क्षितिधरशिरस्समार्चिस्त्वत्प्रचण्डपरिक्रमैः ।
विहितपृथिवीकम्प. भेद्ध समभ्यतिताश्रयन्नगरनिकरान्हन्त्युद्भ्रान्तैर्दपद्द्रवनिर्झरैः ॥ ९३ ॥

भवदविहिता जीर्णा वृक्षा क्षितौ शरदा शतं
परिणततरेह्वालात्मानो व्रजन्ति च हीरताम् ।
खमिळनवशादुर्व्यास्तैलं ददत्यपरेऽमितं
कतिचन महायन्त्रौघाना भवन्त्युपकारिण. ॥ ९४ ॥

अजमृगदृशां वृन्दैः कूले तमालवनाकुले
दिनकरतनूजाया ज्योत्स्नासिते परिखेलतः ।
चिरविहृतिजा श्रान्ति दूरेऽकृथा वनमालिनः
कुवलयदळश्यामाङ्गानामभीष्टणनिमर्दनैः ॥ ९५ ॥

विमलवलभिनीलाश्माद्रिव्रजप्रतिमोर्मय-
स्तपनदुहितुर्निम्नावर्तप्रमेदभयङ्कराः ।
कलिमलहरैस्तुङ्गैर्भङ्गैस्त्वया व्यतिकारिता-
स्त्रिदिवसरितः कर्पूरोर्वीधरप्रतिशात्रवैः ॥ ९६ ॥

विपुलमतुलश्रीलास्यं यत्परीतगिरिव्रजं,
विमलसलिलोन्मीलत्पद्मोल्लसत्कलहंसकम् ।
ननु हरगिरिमान्तं चक्षु फलं त्रिदशसर-
स्तदपि भवतः क्रीडास्थानं प्रसिद्ध्यति मानसम् ॥ ९७ ॥

हिमगिरिदरीद्वारोदारारवामरनिम्नगा-
सततपतितश्वेतस्रोतस्तरङ्गपवित्रितम् ।
मरकतमणीवर्णैर्घासैस्तलं समलङ्कृतं
पवन ! सुखमध्यासीनस्त्वां पुरनुभवामि किम् ॥ ९८ ॥

विमृहि सततं सम्राट्स्थान त्वमेव सुपर्वणा-
महमपि मुदा सम्मन्वे तत्सुहृद् गतमत्सरः ।
प्रकृतिचपलो मोपेक्षिष्ठा, परन्तु समीर ! मां
न खलु गणयत्याढ्यो वर्गः सयेन तपस्विनम् ॥ ५९ ॥

त्वमसि सततं सर्वत्र त्वं बिभर्षि समं जग-
त्वमसि च महान्देवोऽध्यक्षस्त्वमस्यखिलप्रदः ।
श्रुतिशिरसि संवर्गः स्यातस्त्वमेव गतिर्मम
प्रशमय महारोगान् शीघ्रं प्रसीद सदागते ॥ ६० ॥

तव गतिमहं रुन्धन्स्वैरं चिरात्समभाषिषि
श्वसन ! विरसा वाचो मित्र ! क्षमस्व दयान्वितः ।
वितर पटुतां स्तोतुं मह्यं वियत्सरितं शुभां
भुवि विजयतामाचन्द्रार्कं समीरसमर्हणम् ॥ ६१ ॥

---

इति महामहोपाध्यायस्य श्रीकृष्णमूर्तिशास्त्रिणः पण्डितराजस्य
मद्रप्रान्तसंस्कृतास्थानकवेः कृतिषु
प्रकृतिविलासकाव्ये
समीरसमर्हणं नाम चतुर्थो विलासः ।



# प्रकृतिविलासकाव्ये

## त्रिपथगासौभाग्य नाम

## पञ्चमो विलासः ॥

---

हिमाद्रिवरनन्दिनीमखिललोचनानन्दिनी
मुपेन्द्रपदवन्दिनीमसमदृक्शिरस्स्यन्दिनीम् ।
अघौघपरिमर्दिनीं सुभगभङ्गसन्नर्दिनीं
तपीविपिनकेकिनी प्रणिपतामि मन्दाकिनीम् ॥ १ ॥

सुधीकुलशिखामणि क्षितिसुपर्वमुक्तामणि-
र्भगीरथपथानुगा प्रकृतिसिद्धमानोज्ञकाम् ।
निरीक्ष्य भृशविस्मयस्तिमितदृक्स्तुतिप्रक्रमे
स भक्तिविनयान्वित शुभपदैरुपातिष्ठत ॥ २ ॥

अवाङ्मनसगोचरान् गुणगणास्त्रिमार्गोद्गमे
फणाभृदधिपोऽपि न प्रभवति प्रवक्तु यदि ।
स्तुया कथमनक्षर शिवशिर परिस्पन्दिनि !
क्षमस्व कृपयाम्बिके ! सरमसप्रवृत्तिं मम ॥ ३ ॥

पवित्रतरवारयः स्फुरदनघवज्रनज-
च्छविच्छुरितदिङ्मुखप्रसमरोर्मिसम्मूर्च्छिता. ।
जगत्त्रितयसत्त्ववृत्त्युपचितस्वरूपा स्मृता
हरन्तु दुरितानि नस्त्रिपथगाझरा मेदुरा. ॥ ४ ॥

निकुञ्जपरिरञ्जितद्रुमकदम्बनीरन्ध्रित-
स्फुरद्धिमदपत्क्षरत्प्रथमवारिपूरोद्गमा ।
तुषारगिरिगह्वरोदरविनिष्क्रमाद्बन्धुरा
पतन्त्यवतु मौक्तिकग्रथितहारराजीव न ॥ ५ ॥

अधिक्षिति पतिष्णुनिर्झरप्रपन्ति पार्श्वद्रुम-
प्रसूनभरसौरभप्रसभचौर्यबद्धोद्यमः ।
निसर्गशिशिराण्यघप्रशमनैकवीरव्रता-
न्यमन्दरयमुत्किरन् मरुदपाकरोति श्रमम् ॥ ६ ॥

सभक्त्यतिशयं स्वयं विपिनदेवताप्यन्वहं
तटोपवननिर्जरद्रुमप्रसुमैः समभ्यर्चति ।
उदग्ररयनिर्झरोर्म्युरुविरावभूरित्रस-
द्वद्विजघटार्भटा नटनलम्पटा स्वर्धुनीम् ॥ ७ ॥

अहस्करकरद्रुतामितहिमौघसंवर्धित-
प्रवाहपरिवर्तितद्रुमकुलायपत्रिव्रजा ।
कराळतरवक्त्रदर्यनृजुतीक्ष्णदंष्ट्रोल्लस-
त्पलौघमकराकुलह्रदशतावताज्जाह्नवी ॥ ८ ॥

ससम्भ्रमसमुत्पतन्निपतदार्तिरूर्म्युद्धुत-[1]
प्रफुल्लकमलोच्चलद्धहळमल्लिकाक्षोज्ज्वला ।
विवृत्तमृदुलोदरक्षणिकचित्रवर्णप्रभा-
तरङ्गितझषाकुला सुरतरङ्गिणी राजते ॥ ९ ॥

विराजति समुद्रजद्विरिसहोदरोर्मिव्रज-
प्रलूनतरमूलभूरुहसहस्रवेलाकुला ।
सहस्रमदसिन्धुरद्वयसभीकरावर्तभा-
पपटीरतरुकोटरोरगवरा सुरह्रादिनी ॥ १० ॥

विभान्त्यमितवीचिपङ्क्त्युदितफेनपुञ्जाञ्चित-
प्रकम्पदळमर्मरारवतमालमूलस्थलाः ।
तटोपवनपाटलप्रसवपातशोणप्रभा
वनान्तरविनिर्गतास्त्रिपथगाझरा झर्झराः ॥ ११ ॥

1. आर्तिर्जलचरपक्षिविशेषः

मराळमहिळापरिक्रमणबन्धुराब्जोल्लस-
न्मदान्धमधुपाङ्गनाकलितगीतिरीत्यञ्चिता ।
तरङ्गपरिवर्तनप्रसितमारुतप्रेङ्खित-
प्रजत्पृथुलनौशतध्वजपटाटति स्वर्णदी ॥ १२ ॥

मनोज्ञतरसैकतस्थलसमुल्लसद्वेतसा
समीरधुतकेतकोद्दळितधूळिसान्द्रामृता ।
हिमोपमसुमोद्गमासम[1]शरावलीमञ्जुळा
विलोचनफलं दिशन्त्यमरशैवलिन्येधते ॥ १३ ॥

चकासति शरा वधूकरनिघृष्टहारिद्रक-
द्रवव्यतिकरोन्मिषद्रुचिरुक्मवर्णार्णसः ।
वयोनुगुणविभ्रमस्फुरणगौडसुभ्रूस्तन-
प्रमृष्टहरिचन्दनप्रगुणितश्रियस्त्वात्मनः ॥ १४ ॥

निगूढकुचमण्डलप्रवरगौडसीमन्तिनी-
गभीरशुभनाभिसङ्गमसमुद्भवोरुभ्रमः ।
विलोलघनकुन्तळश्लथितपुष्पमाल्योद्गळ-
त्सुगन्धिमधुपङ्किलः स्फुरति गाङ्गभङ्गोद्गमः ॥ १५ ॥

1. शरस्तृणविशेष ।

दृषत्रिकरदन्तुरस्खलच्चलन्महोर्म्यारवः
प्रवृद्धतरतीरभूधरदरीप्रतिश्रुन्त्यलम् ।
विधातुमधिकाद्भुतं विबुधदीर्घिकास्रोतसां
निमज्जदिभयूथपद्वदृहन्ति वृन्दानि नः ॥ १६ ॥

झषोत्प्लवनकाङ्क्षिदङ्निभृतगात्रतीरश्रित-
क्षुदार्तबिसकण्टिकाशतसुखासिकोल्लासिनी ।
अमन्दजवचङ्क्रमप्रबलनक्रचक्रत्रस-
त्तिरोहितजलाण्डजा जयति जह्नुकन्यानघा ॥ १७ ॥

प्रमत्तमधुपच्छविच्छिदुरपक्वजम्बूफल-
प्रपातपरिपाटलद्युतिरमर्त्यकल्लोलिनी ।
क्वचिच्च वरवर्णिनीश्रवणभागदिन्दीवर-
प्रमृष्टरुचिराञ्जनाञ्चिततनूर्लरीनृत्यते ॥ १८ ॥

प्रचण्डरवसम्प्लवप्रसभमज्जितारण्यक-
च्छन्दोदवसिताऽनघद्विजकुलायनिर्मूलिनी ।
निगीर्णमदवारणाजगरमण्डलाकर्षिणी
भयङ्करतरा सरित्सुमनसां प्रचञ्चूर्यते ॥ १९ ॥

मरालकुलकौतुकोत्पतनसंशयाधायक-
प्रभञ्जनसमुद्धुतोर्म्युदितफेनपुञ्जाञ्चिता ।
मदोत्कटतटाटवीकरटिराड्भिरत्युद्धटा
त्रिविष्टपतटिन्यटत्यविरतं रटन्ती स्फुटम् ॥ २० ॥

लसन्मृदुलशैवलोपलतलस्खलद्वीचिका-
प्रनृत्यदुदकस्रुतिप्रहिततूलरोचिःकणान् ।
प्रकीर्य हरति श्रमं रतिसमुद्भवं सुभ्रुवां
मनोज्ञसुरनिम्नगा तटनिकुञ्जभाजां मरुत् ॥ २१ ॥

तटच्छदकुटीवसन्मुनिहुताग्निधूमोद्गम-
प्रभिन्नरुचिपल्लवद्रुमसमुत्पतद्वायसा ।
अजस्रयजनोत्सुकद्विजपरिष्कृतग्रामका
समाकलितभावुका वहति देवतावापिका ॥ २२ ॥

अनल्पजवपोप्लुवप्रमदधार्तराष्ट्रव्रजाः
समुच्छ्रितवनस्पतिप्रकरमूलमूलोलुवाः ।
पवित्रतरदेवतायतनमण्डलीयोयुवा
जरिहुततरामघं सुरसरिज्झराः पोपुवाः ॥ २३ ॥

मदान्धविपिनद्विपोन्मृदितसप्तपर्णक्षर-
न्निकामघनदुग्धजप्रवरगन्धवेलोज्ज्वला ।
विचित्रतररक्तच्छदप्रकरशक्रगोपोद्गम-
प्रदीप्ततटशाद्वला लसति लेखशैवालिनी ॥ २४ ॥

सदाप्रतिफलत्तटद्रुमसमुच्छ्रितोर्म्युद्भव-
प्रभूतजलदभ्रमाकलितलास्यबर्हिव्रजा ।
निरस्तमिहिरातपद्रुनिकुरम्बनीडाण्डज-
प्रहर्षरवनिर्भरा कुतुकमादधात्यद्रिजा ॥ २५ ॥

प्रफुल्लकमलावलीजठरशायिहंसार्भका
वनस्पतिपरिच्युतामितसुमप्रपातार्चिता ।
तृणाग्रमिहिकाल्पप्रतिफलत्तटाद्रिद्रुमा
प्रभातसुभगां श्रियं परिबिभर्ति भागीरथी ॥ २६ ॥

निराकृततटाटवीकुटजगुल्मवाटीकुटी-
स्फटाप्रकटितार्भटोन्नटनलम्पटाहिच्छटा ।
रटद्विटपिकोटरश्रितकुटुम्बकोयष्टिका
त्रिविष्टपतटिन्यसौ स्वयमटाट्यतेऽपि क्षितौ ॥ २७ ॥

हरिन्मणिसहोदरद्युतितृणाङ्कुरास्वादन-
प्रपुष्टहरिणार्भकोल्लवनमञ्जुकुञ्जाञ्चिता ।
सुवर्णरुचिचम्पकस्तबकरेणुविक्षेपण-
प्रवीणतटमारुता त्रिपथगा परिस्पन्दते ॥ २८ ॥

रसालवनपल्लवप्रसनजातसङ्गीतक-
प्रियङ्करवनप्रियाध्युषिततीरचेतोहरा ।
वदान्यसमतीरभूरुहविनम्रशाखोल्लस-
त्फलानि सुरनिर्झरिण्यपचिनोति वीचीकरैः ॥ २९ ॥

मदानवदभद्रवधूपृथुनितम्बविस्रंसित-
प्रदीप्तकनकाम्बरप्रकरकर्षणान्तर्जला ।
द्रुतस्थपिततीरगालसपुरन्ध्रिवीचिच्छटा
समेधयति विष्णुपद्युपसि भूरि हास्य रसम् ॥ ३० ॥

विनिद्रतरकैरवोदरमरन्दसान्द्रीभव-
त्तरङ्गपृषदुत्किरश्वसनमेकतारङ्कृता ।
चकोरवरवर्णिनीहृदयनन्दनेन्दुप्रभा-
मनोज्ञतटकानना स्रवति देवकूलङ्कषा ॥ ३१ ॥

अदभ्रवरविभ्रमाङ्कुरितमारवाराङ्गना-
वशाव्यतरणस्फुरत्पुलिनचन्द्रशुभ्रप्रभा ।
किरातवनिताशताकलितकामकेळीरस-
त्सटीविपिनकुञ्जभूर्वहति शन्तनुप्रेयसी ॥ ३२ ॥

स्वभावपरिपीवरस्तननितम्बभाराङ्गना-
परिक्रमणवैखरीजितमराळयोषाकुला ।
अमन्दविरहव्यथाकुलितकोकशोकेन्धन-
क्षपाकरकरप्रभाकवलिताऽयते द्योनदी ॥ ३३ ॥

कनत्कनकसप्रभस्फुटितकेतकालिस्खल-
त्परागपरिधूसरप्रततसैकतप्रान्तभूः ।
मरुद्विधुतवीरुदुच्चलितचञ्चरीकाङ्गना-
स्वनाकुलितकानना जयति देवनद्यात्मना ॥ ३४ ॥

समादधदपीश्वराध्युषिततीर्थघट्टाटवी-
प्रशान्तमदकुञ्जरप्रमुखदुष्टसत्वाभटा ।
गळद्बकुलकल्पितास्तरणमूलवेलाद्रुमो-
त्सतरुव्रगसङ्कुला लसति शैवलिन्यामरी ॥ ३५ ॥

परस्परकुतूहलानमितसल्लकीपल्लव-
प्रवर्धितनिजार्भकद्विरददम्पतिद्योतिनीः ।
कुलायशयशावकव्रजविदारितास्याहित-
स्वधान्यशकुना वनीर्वहति पुष्णती भीष्मसूः ॥ ३६ ॥

निमज्जदुरुयौवतस्तनमहीध्रसञ्चूर्णित-
प्रसक्तशुभकुङ्कुमोच्छ्रिततरङ्गशीर्णाः कणाः ।
अनल्परयसम्प्रहृत्युदितरक्तमात्राभ्रमं
चिरं विदधतेतरां श्रितवताममर्त्यापगाम् ॥ ३७ ॥

मनोज्ञकलविङ्कसंस्फुरदुदारकेदारभू-
सहस्रनवरुग्मरुक्कलममञ्जरीमञ्जुलाम् ।
विपाकरुधिरारुणच्छिदुरबिम्बरज्यच्चुकां
निपिञ्चति वियत्तटिन्युभयपार्श्वभूमिं सदा ॥ ३८ ॥

निशाटनघटामेटीशुम्बरिताटवीपादप-
प्रलीनबलिभुग्भयङ्करविभावरीनिर्भरा ।
मृगेन्द्रदलितेभराट्पृथुलकुम्भपीठीगळ-
न्निरर्घनवमौक्तिका जयति जह्नुकन्यावनी ॥ ३९ ॥

निशीथमृगयाकुलीकृतवनस्थलद्वीपितृ-
    द्रुतप्रशमनक्षमस्फटिकनिर्मलापाशया ।
तटद्विरदफीट्कृतिप्रतिनदन्महीभृद्गुहा-
    प्रबोधितमृगादना निशि भयप्रदा स्वर्धुनी ॥ ४० ॥

अजस्रजयकूलमुद्रुजझरोर्मिसांराविण-
    प्रकामशमितक्षपाक्षुधितवन्यसत्त्वध्वनिः ।
दृषत्स्थपुटितान्तराप्रहतपूर्वपाणिन्धम-
    स्फुटेतरतटीपथा ललति लेखलोकापगा ॥ ४१ ॥

उपर्बुधभृताहितत्रिणयनोरुवीर्योद्भव-
    कुमारशुभमातृतोपगमभूरिसम्भाविता ।
द्विषन्तपपराक्रमार्यममहात्मदेवव्रत-
    प्रसूर्विजयतेतरामपि सुपर्वणां देवता ॥ ४२ ॥

महाप्रलयवारिधिव्यतिकरकमाप्रकल्प-
    प्रवाहविपरिभ्रमद्विनिधुमहोद्भवजा ।
निमज्जननिरुन्द्ध्वसद्गिरिमदुरप्रवाक्रन्दना
    तरङ्गपरिवर्तितामरसनाप्रसङ्क्रन्दना ॥ ४३ ॥

( कुलकम् )

प्रतिस्मरभिदद्विवीच्यसकृदात्मनागाश्रम-
प्रताम्यदसुलालसत्रिदशपत्यनर्थोद्यमा ।
समुल्लवनसाधनस्तनसुवर्णकुम्भाप्सरो-
मुखाब्जकचशैवलश्लथितपुष्पमुक्ताकुला ॥ ४४ ॥

तरङ्गगलितांशुकोत्प्लुतसुपर्ववाराङ्गना-
नितम्बपुलिनव्रजस्तुरविरोधिनेत्राण्डजा ।
निपातितसुरद्रुमद्रुतविनष्टचिन्तामणि-
प्रमुष्टसुरकामधुग्भसमरोर्मिभीतिप्रदा ॥ ४५ ॥

युगान्तमरुदुच्छ्रितोर्म्युदरलीनमेघङ्कर-
द्युपुष्पवदुदीतभीकरमहान्धकारावृता ।
अजस्रपरिवर्धितत्रिदशभूरिहाहारव
मकारमुखरीकृताखिलहरिज्झरापूरिता ॥ ४६ ॥

विलुम्पितनिलिम्पभूः सुरसरिद्वरेत्थं क्रुधा
वहन्त्यपि धगतलावतरणप्रसङ्गोद्भुवा ।
प्रतिक्षणविजृम्भितात्मनिहतावलेपोद्धता
तृणाग्रहिमबिन्दुता गिरिशमूर्धनि प्रापिता ॥

कठोरतपसा ततो त्रिभुवनंसमाराधयन्
भगीरथनृपश्चिरादशिथिलप्रयत्नः स्वयम् ।
अवाप विबुधापगां धरणिमानिनीपुत्रीतीं
समुद्यमसुरद्रुमः फलति हि क्षमां बिभ्रताम् ॥ ४८ ॥

भगीरथमनुव्रजन्त्यधिपथञ्च जह्नोः कुटी-
मनीनशदपिद्रुतं परमकोपनस्तां पपौ ।
ततः स्तुतिशतैः कृतैश्चिरतरं, प्रसन्नः पुन-
र्जहौ श्रवणतस्ततः प्रभृति जह्नुकन्या स्मृता ॥ ४९ ॥

विधाय महता परिश्रमभरेण मर्त्यापगां
स्वमातुलगरुत्मदुत्पत्यनुसृतो भृशं श्रद्दधत् ।
नृपः स सगरात्मजान्कपिलकोपदावानल-
प्रपातशलभायितान्शुभजलैरताप्सीत्पितॄन् ॥ ५० ॥

अजस्रममरावनीविहरणैकबद्धस्पृहा-
प्यधिक्षिति जनुष्मतां कलयितुं महानुग्रहम् ।
समुन्नतहिमावनीधरवरादमर्त्यात्मनः
प्रसूः प्रभवति स्वयं सकलभाग्यसन्दायिनी ॥ ५१ ॥

हरामनिशमंहसां हरशिरस्तटीलालसां
जगत्त्रितयशर्मदां जनिमृतिप्रणाशप्रदाम् ।
समस्तसरिदीश्वरां समवने सदा भास्वरां
श्रयध्वमवनिङ्गतां जनिभृतो ! ऽद्य जह्नोस्सुताम् ॥ ९२ ॥

समस्तसुरमन्दिरप्रवरराजवाराणसी-
विहाररसिकाग्रणीः स्फुरति विश्वनाथोऽनया ।
इयञ्च परिभूष्यते भगवतैव तेनानघा
मणीकनकसङ्गतिर्जगति कस्य न स्यात्प्रिया ॥ ९३ ॥

कलिन्दगिरिकन्यका सरसनीरगोदावरी
त्रिधुप्रियसुतानघा भगवती सरस्वत्यपि ।
कवेरतनुजा मनोहरजला च सिन्धुर्धुनी
वहन्ति पडिमाः क्षितौ सुरसरित्सुसख्यः शुभाः ॥ ९४ ॥

निशाचरकुलानलप्रलयकालमेघात्मना
श्रियः पतिरवातरन्निगमधर्मरक्षापरः ।
स यत्र, परिपावयन्त्यधिभु, तामयोध्यापुरीं
सरिच्च सरयूः स्वयं घुसरितैव सङ्गच्छते ॥ ९५ ॥

स्ववेणुनिनदैर्हरन्नमरशाखिमूले गवां
   व्रजं व्रजपुरन्ध्रिभिश्चिरमरस्त नन्दात्मजः ।
यदीयनटभावमन्विशदकौमुदीबन्धुरं
   सुताऽहिमरुचेश्च सा व्यनिकरोति गङ्गामसि ॥ ५६ ॥

अभङ्गुरतरङ्गया महिमभिभृशं तुङ्गया
   कृपालसदपाङ्गया हरिपदाम्बुजासङ्गया ।
वितीर्णभवभङ्गया श्रितवता, तया गङ्गया
   मिळत्यमितकौतुकात् क्वचन धातृपुत्रा नदी ॥ ५७ ॥

स्रवन्त्यधिधरान्तरं शुभपयाः सरस्वत्यपि
   प्रसिद्धनिजवैभवा जगति, सम्भिनत्ति स्वयम् ।
श्रैरमरदीर्घिकायमुनयोश्च यशोच्छ्रितैः
   प्रयागमवनौ हि तं सकलतीर्थराजं विदुः ॥ ५८ ॥

अनेकमुखमम्ब ! ते निगमनञ्च यादःपतौ
   व्यनक्ति तदिह स्फुटं शतमखादिदेवेहिते ।
पुरोरपि समुद्धतप्रकृतिकस्य याद्दक्फलं
   सतां खलु विचेष्टितान्युपदिशन्ति नीतीर्भुवा ॥ ५९ ॥

सतां हृदिव निर्मलं वृजिनतूलकालानलं
रघूत्तमसमर्चितं निगमसंहतिश्लाघितम् ।
पुरातनयशोन्वितं पुरभिदुत्तमाङ्गश्रितं
भजध्वममरापगोदकममन्दमानोज्ञकम् ॥ ६० ॥

नमोऽस्तु जगदम्बिके ! भगवति ! स्तुता भक्तितः
पुनीहि कृपयार्भकं तव पदाब्जभृङ्गं द्विजम् ।
श्रियं वितर मेऽमितामव ममात्मजान्सादरं
भुवि त्रिपथगागता सुभगता विजेजीयताम् ॥ ६१ ॥

---

इति महामहोपाध्यायस्य श्रीकृष्णमूर्तिशास्त्रिणः पण्डितराजस्य
मद्रप्रान्तसंस्कृतास्थानकवेः कृतिषु
प्रकृतिविलासकाव्ये
त्रिपथगासौभाग्यनाम पञ्चमो विलासः ।



श्रीः

# प्रकृतिविलासकाव्ये

## द्विजराजसाम्राज्यं नाम

## षष्ठो विलासः



कलयतु कुशलं नः काळकालावतंसः
  कुवलयदळनेत्रानन्दसन्दानशीलः ।
सुमशरसुहृदिन्दुः सूर्यवत्कालमाता
  भुवनहृदयहारी व्योम्नि रात्रौ विहारी ॥ १ ॥

चरितुमिदमसीमं व्योम ते सोम ! सिद्धै-
  र्गमनमधिकमनोज्ञैः किङ्करैः ऋक्षवर्गैः ।
तव सह मृगदृग्भिः सन्निधत्ते च रोहि-
  ण्यतिशयितुमलं त्वां भाग्यवन्तं न कोऽपि ॥ २ ॥

तुहिनरुगजनिष्ठाश्चेतसस्त्वं विराजः
  स्फुरसि रविरिव श्रीवासुदेवस्य नेत्रम् ।
अविरतमपि मूर्ध्ना लाल्यसे शूलिना, त्वां
  निरुपममहिमानं स्तोतुमीशः कथं स्याम् ॥ ३ ॥

प्रकृतिशिशिरमूर्तिर्दृष्टमात्रः क्षणेन
व्यपनयसि समस्तं तापमिन्दो! मयूखैः।
परिहरसि सुदूरं शार्वरध्वान्धकारं
किमपि हृदि विधत्से कौतुकं नः समेषाम् ॥ ४ ॥

फलमनुपममिन्दो! नेत्रभाजां विराज-
स्यधिवहसि विशङ्कं व्योम्नि सम्राट्पदं त्वम्।
अपि लसति समन्तादक्षसङ्घेऽतिसङ्ख्ये
श्रयति रमणमेव त्वां हि सौभाग्यलक्ष्मीः ॥ ५ ॥

अमृतकर! गिरां त्वं वर्तमानः सुदूरं
मधुरिमनिधिदेवः प्रेमपात्रं प्रजानाम्।
भुवि कतिपयशब्दैर्वर्ण्यमानः कथं स्याः
प्रकृतिगुणकथायां क्लेशभाजां कवीनाम् ॥ ६ ॥

स्फुरसि निशि शशाङ्कः शङ्खवत्त्वं नभोब्धौ
विहरसि च विहायःपल्वले मल्लिकाक्षः।
गगननलिनपत्रे भासि दुग्धाब्धराशि-
र्लसमि मधुरहासो व्योम्नि तन्व्याः प्रकृत्याः ॥ ७ ॥

अमृतकिरणजालैर्लोचनासेचनोत्कै-
श्चिरतरमवगाढं सान्द्रमानन्दकन्दम् ।
सहृदयहृदयेऽब्ज ! स्वैरमङ्कुरयन्द्रा-
गुदयशिखरिशृङ्गं तुङ्गमारोहसि त्वम् ॥ ८ ॥

अहिमकरमयूखालोक एवाश्रितस्त्वां
हिमकरमनवद्यं ह्यमत्यन्तशीतः ।
परिमृशति चितःचन्सौख्यमङ्गानि भूयः
प्रकृतिरपि विपर्यैत्याश्रयस्य प्रभेदात् ॥ ९ ॥

गगनकुसुमसिद्धं सङ्गिरन्तां विमूढा
वियदतुलसरस्यां श्वेतमब्जं सुजातम् ।
प्रकृतिवरपुरन्ध्र्यास्सर्वसौन्दर्यसारं
रसिकमधुपगर्भं मूर्तमाचक्ष्महे त्वाम् ॥ १० ॥

अपथि चरितुकामान्द्रीपिकल्पान्खलौघा-
न्सुजनहृदयतापे सन्ततं श्रद्दधानान् ।
रजनिकर ! धरण्यां लोकमान्यांश्च साधू-
नवसि सममरम्यं तारतम्यं निरस्यन् ॥ ११ ॥

अहमिह नु पिबेयं त्वां विनिष्पीड्य चन्द्र !
द्रुतमिति मतिमेति प्रेमतो मर्त्यलोकः ।
दिवसकृति तु नैव, तत्र किं स्यान्निदानं
हृदयहरणदक्षास्निग्ध ! लालित्यतोऽन्यत् ॥ १२ ॥

अमृतकर ! मनोज्ञं दर्शनं तावकं नः
स्थगयति मुदितानां मर्त्यतां जन्मसिद्धाम् ।
अविमहरमरत्वं त्वाममीक्ष्णं निगीर्य
त्रिदिवमधिवसन्तो, नैव चित्रं ह्यमुत्र ॥ १३ ॥

वहसि समधिकं त्वं साह्यमिन्दीवरिण्या
रमण ! सुमशरस्य स्वान्तजत्वाविशेषात् ।
स कथमितरथोच्चैस्साधयेदात्मलाभं
स्वयमभिनिविशन्ते मित्रकृत्यं हि सर्वे ॥ १४ ॥

निरवधिकदयाब्धे रक्षितुञ्जीवलोकान्
शशधर ! परिपुष्णास्योषधी रश्मिजालैः ।
भुवि न कतिपये सज्जानते ते महिम्ना
भवति यदकृतज्ञ, दोषमारोपयन्ति ॥ १५ ॥

मधुरिमपरिपोषाधायकं नीलिमानं
प्रकृतिविहितमेतं तावकं श्रीसमेतम् ।
अभिदधति कलङ्कं युक्तिमुत्सृज्य केचि-
त्किमिव न विधदेरन्कुन्तलेऽपि श्रियस्ते ॥ १६ ॥

शमयसि सुमनोभ्यस्सादरं स्वं शरीरं
स्वसुखविमुख एष त्वं वितीर्याशनायाम् ।
दिवि भुवि न हि कोऽपि त्वादृगान्ते वदान्यो
गुणनिधिमपि लोको वक्ति दोषाकरं त्वाम् ॥ १७ ॥

भुवि गतमनुगच्छत्येष लोकः स्वभावा-
त्त्वलपतु च यथेच्छं चन्द्र ! मा गा विषादम् ।
गुणगणपरिपूर्णं शङ्करस्त्वां स्वमूर्ध्नि
वहति सततमेतच्छ्रेयसे भूयसेऽलम् ॥ १८ ॥

गुरुपरिवृढदारानप्यहो ! दोषभाजः
कतिचिदकथयंस्ते लिर्शिशङ्कं स्वदर्पात् ।
मृदुतरहृदमीषां त्वं क्षिपान्दुर्जनानां
कथमपि न हि जह्युर्दुर्दोऽब्ज ! स्वभावम् ॥ १९ ॥

कतिपयशठमिथ्यापोदितात्यन्ततप्तं
हृदयममृतमूर्तेः प्रापदिन्नालतां प्राक् ।
भवति च न कलङ्को, वस्तुतश्शीतभानो !
कविरहमभिदध्यां, जानतां संशयानाः ॥ २० ॥

रजनिरमणलक्ष्म प्रेक्ष्य सशेरते ये
स्वयमिह बहुधा, ते जानते नैव तत्त्वम् ।
प्रतिफलति सशैलं गोलमुर्व्या विधावि-
त्यभिदधति हि तत्त्वज्ञानिनो निर्विकल्पम् ॥ २१ ॥

विशदजलदखण्डान्मन्दमन्दं विलङ्घ्य
स्फुरसि गगनभागे चन्द्र ! गच्छन्सलीलम् ।
तदिदमनुकरोति स्वर्णदीवीचिपुञ्जो-
द्भजनममितदर्पाद्राजहंसस्य रम्यम् ॥ २२ ॥

मलिनजलमुचस्त्वामावरीतुं यतेरन्
श्रुतिपुटकटुशब्दैरस्थिरद्योतभाजः ।
विजयिन इव कामं डम्बरञ्चापि कुर्यु-
स्त्यज हृदि भयमेभ्यो वस्तुतोऽधस्तनेभ्यः ॥ २३ ॥

प्रियरमण ! हि रोहिण्यादिवामेक्षणानां
विलसति भवतेन्दो ! हन्त ! राजन्वदेतत् ।
उडुसमुदयरम्यं व्योम राज्यं सुराज्ञा
प्रकृतिविहितमुच्चैर्बिभ्रता स्वाधिकारम् ॥ २४ ॥

कलयति खलु लेखैः कल्प्यमानः कलानां
मुदमधिकतया ते व्यञ्जयन्सङ्क्षयोऽपि ।
त्वमिव वद वदान्य. कोऽर्पयेदात्मदेहं
प्रतिदिनमितरार्थे निर्विशङ्कं शशाङ्क ॥ २५ ॥

वितरसि फलमक्ष्णां श्लक्ष्णमूर्तिः समेषा-
मधिचिकुरभरं प्राग्दिक्पुरन्ध्र्याः स्फुरंस्त्वम् ।
भ्रमरनिकरगर्भोन्निद्रमल्लिप्रसून-
प्रकर इव समग्राकल्परूपः प्रकामम् ॥ २६ ॥

तिमिरमपि च कृत्स्नं ज्योत्स्नयोत्सारयन्त
सह निशि मलिम्ना हृदनेनाखिलानाम् ।
निदधतमुरुलक्ष्मीं सीदमिन्दीवराल्यां,
कतिचन बत ! नेत्रैस्त्वामपीत्वा स्वपन्ति ॥ २७ ॥

उदधिमथनकाले श्रीमुखा रम्यभावाः
सहभुवमपि हित्वाऽयासिषुः कालकूटम् ।
त्वमपि शिवमवापत्तद्वियोगासहिष्णुः
सहजमजहदब्ज ! क्रूरमुर्व्यामपूर्वः ॥ २८ ॥

तरणिकिरणजौष्ण्यात्पङ्कजान्युज्जिहाना
समभवदसिताब्जान्यब्जिजाता न वेत्ति ।
शिशिरतरकरैः श्रीसोदर ! द्रष्टुकामो
विदळयसि समन्तात्किन्त्विन्दीवराणि ॥ २९ ॥

समजनिषत भावा ये च जैवातृकाद्वयः
श्रियमपरदुरापां त्वाद्दशास्ते श्रयन्तः ।
विदधति मधुरिम्णाऽकृत्रिमेण प्रमोदं
सहृदयहृदयानि स्वैरमासाद्य सद्यः ॥ ३० ॥

प्रशमयसि पिपासां त्वं चकोराङ्गनानां
परिहरसि च मौनं सादरं कैरविण्याः ।
किरसि दिशि करैः श्रीचन्द्र ! सान्द्रामृतानि
स्फुरसि रसमुदारं वर्धयन्सर्वयूनाम् ॥ ३१ ॥

अहनि तपतु कामं हन्तु भूयोऽन्धकारं
दळयतु नळिनानि भ्राजतां लोकचक्षुः ।
कथमयमयमानोऽप्ययमा व्योमसीम-
न्यधिवहतु कलानामीश ! लालित्यलेशम् ॥ ३२ ॥

अपि हृदयहरेणानेन सौभाग्यभूम्ना
हिमकर ! परिहर्तुं नेशिषे कोकशोकम् ।
त्वयि सति समभावे वस्तुनो नैव दोषो
विधिरपि न विदग्धः प्रीणने यत्समेषाम् ॥ ३३ ॥

सवयमुदयमानं यामिनीशाद्रिशृङ्गे
प्रकृतियुवतिरेषा तोषतः पुष्पवर्षैः ।
नयनसुभगमर्चत्यम्बरे त्वां, विशीर्णा-
न्यह ! दधति समन्तादक्षसंज्ञां सुमानि ॥ ३४ ॥

अभिभवति हि भानुः स्वेतरेषां प्रकाशं
श्रुतितिमिरहितोऽपि स्वैरमीर्ष्याभरेण ।
अनुमतिमपि दत्मे तारकाभ्योऽपि भातुं
गदति जगदशेषं हन्त ! दोषाकरं त्वाम् ॥ ३५ ॥

यमिह समुदितेर्ष्यो लोक एष प्रणिन्दे-
त्स च गुणगणपूर्णो व्याप्तिरेषेति विद्धि ।
निगमशिखरमृग्यं त्वद्गतंसत्त्व गौर्या
रमणमपि कियन्तः स्वैरमुन्मत्तमाहुः ॥ ३६ ॥

मृदुलतरलमुग्धस्निग्धवर्ष्माणमेनं
ग्रसितुमसकृदिन्दो ! सैंहिकेयो भवन्तम् ।
गतभयमभिधावत्युष्णरश्मौ तु नैवं
सरळगुणनिकायो मूर्खधिकारहेतुः ॥ ३७ ॥

कतिचन दधमानाः शिष्यमाणाः कलास्ते
श्रियमपि भवितव्य लोपमासेदुषीणाम् ।
मतिरजनि कलानां कृष्णपक्षे स्फुरन्त्यः
कमपि हि परितोषं क्षीणपूषन् ! ददन्ते ॥ ३८ ॥

द्युतिमपि ददता स्वां भानुना त्वं कृतज्ञो
भजसि शुभमजर्यं पूज्यपादेन दर्शो ।
निशि मृशमुडवोऽमी डम्बरं कुर्वते, य-
त्सरसनिहृतिहेतुः स्वामिनोऽसन्निधानम् ॥ ३९ ॥

(अजर्यमित्यस्य सङ्गतमितिविशेष्यमध्याहार्यम्)

प्रतिसुभगपदार्थं व्यञ्जयन्ती परेशं
प्रकृतिरकृतकश्रीमत्स्वरुपेण लीनम् ।
जयति मधुरशुभ्रच्छत्रमुद्दीप्तमुक्तं
हिमकरमवलम्ब्य त्वां स्वराज्यं वहन्ती ॥ ४० ॥

नवरजतशलाकाश्रीमुषस्ते मयूखा
मनसि निविशमाना नेत्रमार्गेण चन्द्र ।
चिरतरपरिलीनानन्धकारं निरस्य
द्रुतमभिनवभावाँल्लीलयोल्लासयन्ति ॥ ४१ ॥

मघवमणिकटाहश्रीहरे ह्यम्बरे प्रा-
ग्दिशि समुदितसन्ध्यारागपूर्णं तवेदम् ।
परिणतमिव पुण्यं पूर्वसिन्धोरुदीतं
शरदि कुमुदिनीशोदारमाभाति बिम्बम् ॥ ४२ ॥

सरसतरपटीरोर्वीधरोरोजरम्या-
मुरुगिरिसरिदूर्मीहीरहारे स्फुरन्तीम् ।
कुवलयदृशमुद्यन्मन्दहासा प्रसूनैः
कलयसि सदुकूलां ज्योत्स्नयारण्यलक्ष्मीम् ॥ ४३ ॥

महति च सुरवर्त्मन्याधिपत्यं दधानं
प्रियतनयमुदन्वान्यामिनीनायक ! त्वाम् ।
मुदिततहृदनुपश्यन्नूर्मिभिर्वर्धतेऽसौ
न हि सुखमिह पुत्रश्रेयसोऽन्यत्पितॄणाम् ॥ ४४ ॥

क्वचन विपिनसीमन्याशृणानैः परीतां
धरणिरुहवरेण्यैर्लोलसां दर्शने ते ।
प्रियकुवलयिनीमालिङ्गच पर्णान्तरेण
प्रसभममृतहस्तैर्हार्दयस्याविशद्धिः ॥ ४५ ॥

अविरळतरुगुल्मश्यामळोपत्यकाया-
स्त्रिशिखरिशिखरमाप्त्वोद्दृश्य भान्तं भवन्तम् ।
सपदि हृदि निदध्मो शर्वमुग्धेन्दुमौळिं
करिपरिवृढकृत्तिं शीतरश्मे ! वसानम् ॥ ४६ ॥

खल इव मलिनात्मा भावतत्वापलापे
कृतमतिरसमर्थः स्थातुमग्रेऽन्धकारः ।
तव समधिकसत्वोद्रिक्तवृत्तेः सुराज-
श्चलहृदचलरन्ध्रान्वेषणाय प्रयाति ॥ ४७ ॥

तिमिरमपि महीभृद्गह्वराभ्यन्तरस्थं
घनभुवि च निलीनं सान्द्रमुर्वीरुहेषु ।
जयति सकलमिन्दो ! चन्द्रिकासारमित्थं
प्रकृतिरमिकचेतःप्रीतये त्यक्तवैरम् ॥ ४८ ॥

पुलिनपृथुनितम्बां प्रान्तभूभृत्स्तनाढ्यां
जलधररुचिवीचीकुन्तलां फेनपुष्पाम् ।
सहजशुचितनुं ग्लौश्चन्द्रिकागौरवस्त्रं
ददुदुदधिसुवेलाकेरलीं हि मुद्रे ॥ ४९ ॥

धवलयसि सुधांशो ! नीलकल्लोलमाला-
कवलितपुलिनालीमञ्जुलामब्धिवेलाम् ।
मदकरिवरमूर्धस्पर्धुरोभूनितम्ब-
स्फुरदुरुरुहद्भिः सादरं पीयमानः ॥ ५० ॥

चलदलदलचेताः प्रायशः स्त्रीसमूहो
युवजनसुलसाध्यो देशकालानुकूल्यात् ।
प्रकृतिचतुरवृत्तो ह्रीसमुन्नेयकाम-
स्तव भवति हि वश्योऽवश्यमिन्दो ! कलाभिः ॥ ५१ ॥

स्वयमचकमत त्वद्रूपधेयाब्धिमग्ना
कुसुमशरभृशार्ता श्रीसुराचार्यभार्या ।
असकृदपि च गर्भे बिभ्रती भर्तृभीत्या
समयविदनिशं त्वामन्वभूदग्निसुभ्रूः ॥ ५२ ॥

त्वममरगुरुदारांश्चन्द्र ! निर्विघ्नितोऽगा
जगदिदमविभाव्य प्राह ताराश्च साध्वीम् ।
शिरसि दधदुमेश. श्लाघते त्वां विगीतं
वयमिह तु विमूढा वेद को धर्मसूक्ष्मम् ॥ ५३ ॥

इयदहमभिदध्या भूसुरस्तेऽद्य राज-
स्त्वमतुलकुलनारी स्वैरमाविल्यकार्षीः ।
यदनुभवसि नित्यं राजयक्ष्माणमुग्रं
चरितुमपथि रागो दीर्घमायुर्विहन्यात् ॥ ५४ ॥

महिमनि हिमधामन्स्निग्ध ! ते सन्दिहे न
स्खलनमसकृदित्थं चिन्तयंस्ते मदूये ।
अपि पशुपतिमाप्त्वा चेत् स्वभावं न जह्या-
स्तदपि बहुमतो नः सर्वथा कालकूट. ॥ ५५ ॥

उपवनमतिसान्द्रोन्निद्रहृद्यप्रसून-
प्रसृमरमकरन्दस्वादमाद्यद्द्विरेफम् ।
परित उदितहर्षोन्मेषकादम्बयोषा-
ध्युषितकुवलयिन्यश्चन्द्र ! चेतो हरन्ति ॥ ५६ ॥

परिमळभरमुग्धं सङ्गिरन्रोहिणीनां
शिशिरतरसमीरो मन्थरोऽयं प्रयाति ।
शिखरिशिखरतुङ्गज्योत्स्निकारम्यहर्म्यो-
ल्लसदतुलनितम्बिन्यङ्गसङ्गैकलोलः ॥ ५७ ॥

नगरवरपुरन्ध्र्यः कृत्रिमश्रीसमृद्धा
विधुकरपरिशुभ्राद्द्राग्कूपारपारात् ।
नयनमधुरमाराच्छुद्रलीलाद्विशृङ्गं
किमु मुखकमलैस्त्वां चन्द्र ! जेतुं श्रयन्ते ॥ ५८ ॥

मधुमलयमरुद्भ्यां दीपयन्कामवह्निं
विरहिजनमनांसि छर्दयन्निर्दयस्त्वम् ।
हिमकर ! मकराक्षीवर्गगर्वोऽस्यभीक्ष्णं
प्रियसुहृदबलायूण्यत्र शस्त्राण्यवेहि ॥ ५९ ॥

श्रुतिततिमयगात्रश्शश्वदुद्धर्धमान-
स्त्वमसमशरसाराम्नायशृङ्गप्रदीप ।
द्विजसमुदयराज ! स्निग्ध ! साम्राज्यमाप्त्वा
भज शमनिशमिन्दो ! शङ्करस्य प्रसादात् ॥ ६० ॥

अनभिमतवचोभिस्ते ह्यपाराध्यमेभि-
र्धरणिदिविपदं मां मित्र ! चन्द्र ! क्षमस्व ।
सहृदयहृदयाब्जद्योमणिर्ग्रन्थ एष
स्फुरतु जगति यावत्कल्पमाकल्प ! शम्भो ॥ ६१ ॥

---

इति महामहोपाध्यायस्य श्रीकृष्णमूर्तिशास्त्रिण पण्डितराजस्य
मद्रप्रान्तसंस्कृतात्थानकवे कृतिषु
प्रकृतिविलासकाव्ये
द्विजराजसाम्राज्यं नाम षष्ठो विलास ।



श्रीः

# प्रकृतिविलासकाव्ये

## प्रभाकरप्रभावो नाम

## सप्तमो विलासः ॥

---

श्रेयो वो दिशतात् त्रयीतनुरयं ब्रह्मेत्युपास्यः सता
जन्मस्थेमलयान् प्रकृत्यनुगमात्तन्वन्ननादिर्विभुः ।
चक्षुः श्रीपुरुषोत्तमस्य निगमैर्वेद्यस्य विश्वात्मनो
बाह्याभ्यन्तरदुस्स्थितान्धतमसध्वंसाय बद्धोद्यमः ॥ १ ॥

आम्नायांश्चतुरो ब्रुवन्त्यचतुरान्माज्ञाः स्तवे तेऽर्यमन् !
मन्दास्माभिदधीय वा कथमहं दूरे भवन्तं गिराम् ।
आयस्यामि भृशं न केवलमहं वाणीमपि क्लेशया-
म्येतत्साहसकृत्यमत्र कृपया क्षन्तव्यमभ्यर्थये ॥ २ ॥

विद्वांसः प्रथमे मयूरसदृशा भक्त्यार्यगृह्याः स्वयं
सूर्यं धार्यमहर्दिवं हृदि सतां श्लोकैरनेकैर्जगुः ।
किं दुष्येम नु तावता कतिपयैः पद्यैः स्तुवन्तः प्रभुं
शिल्पज्ञेषु नरेषु सत्सु मधुपा बध्नन्ति किं नो गृहान् ॥२ ॥

प्रातः शीतगभस्तिरस्तशिखरिण्युष्णीपवलम्बते
बिम्बं बिभ्रदशुभ्रवस्त्रशकलश्रीकं प्रभादुर्विधः ।
रश्मिः कृष्णामृगस्य पाण्डरपृषन्त्यक्षाण्यध. कुर्वते
भात्यभ्रं विरताभिनायकमहारङ्गाङ्गणश्रीधरम् ॥ ४ ॥

वातो वाति समन्ततोऽपि रसितैः शीतः प्रभातोद्गतः
श्रोत्रप्रीतिकरं विरौति कुतुकाज्जाग्रत्पतत्रिव्रजः ।
आकाशः परिपेशल. शरसुमश्रीहारिभिर्वारिदै·
स्वान्तं हन्त ! विकासयन्ति परित. शान्ता दिगन्ता भृशम् ॥

सौन्दर्यं प्रतिभावमुद्गलदिव न्यस्तं प्रकृत्यादरा-
दुग्रत्वा सन्तमसासुरं विदधतं शून्यं जगन्निर्दयम् ।
संहत्याभ्रतल तदीयरुधिरक्षोदाक्तमातन्वती
सन्ध्या सैरिभमर्दिनीव भगवत्याराध्यमानैधते ॥ ६ ॥

विष्वद्र्यञ्च्यरुणत्तमांस्यतितमां सूतोऽस्फस्यारुण.
शुद्धां कर्तुमना विकर्तनविहृत्यर्हामिमां पद्धतिम् ।
नैरन्ध्र्यच्च समीरणेन परित. शीर्णा हिमानी जहौ
जीमूताः शनकैः प्रधावितुमुपक्रान्ता विभीता इव ॥ ७ ॥

प्राचीमालम्बिलोकनैकरसिकां रोचिर्भिरङ्कूरय-
    न्नन्धूकस्तबकप्रभापरिभवाहम्भावसम्भावितैः ।
बिम्बं बिम्बफलोज्ज्वलश्च परित सन्दूलकाण्डायितैः
    रुल्लासं कमलाकरस्य कलयन्नुद्यन् रविः खेलति ॥ ८ ॥

पूर्वाम्भोनिधिगर्भतः किमुदभूत्प्रद्योतनो भानुभिः
    कुर्वन्विद्रुमताम्रमम्रमसितं पाथश्च सारस्वतम् ।
सर्वेषां श्रियमित्थमादधदयं मन्दोद्गतैरञ्चितै-
    रारोहन्निव लीलयोदयगिरेः शृङ्गं समालोक्यते ॥ ९ ॥

इन्धान महिमैकधामभिरहर्नाथं स्वय धामभिः
    प्रत्यग्रोद्धृतदिग्धकुङ्कुमरज पङ्काकुलश्रोज्ज्वलम् ।
प्राची चन्दनचर्चिताचलकुचप्राग्भारनम्रा करैः
    प्रेम्णा द्रागपरिरभ्य भान्तममितं भक्त्या भजामोऽन्वहम् ॥

सिन्दूरारुणगन्धसिन्धुरसमुत्तुङ्गोत्तमाङ्गोपरि-
    स्वैरास्कन्दनपाकमर्दनमथ कुर्वन्निवाहर्मुखे ।
पूर्वोर्वीधरतुङ्गशृङ्गमधिकैः संरञ्जितं धातुभी
    रक्तोऽत्यन्तमनन्तवर्त्मनि विभात्याक्रम्य तिग्मद्युतिः ॥११॥

राजीवव्रजजीवनौषधमुपस्योजायमानं जवा-
दुद्गच्छन्तमनच्छतां श्रितवतां छयन्तं कुसुम्भच्छविम् ।
सुत्राम्णो दिशि चार्णवोऽरुणममुं नीलैर्दीर्णैः करै-
र्विभ्रद्भिः किमु फेनपुञ्जकुसुमस्रग्भारमभ्यर्चति ॥ १२ ॥

पूष्णः पुष्करभूषणस्य घृणया पूर्णा घृणिश्रेणयो
मुष्णन्तो घुसृणारुणश्रियमुपस्यग्रे विवर्धिष्णवः ।
अग्रण्यस्तमसां निबर्हणविधावर्णोजसम्प्रीणने
प्रावीण्यं दधते तथा वितरणे श्रीणामुदीर्णा नृणाम् ॥

अस्तोकं भविकं क्रियासुरधिकश्रीकास्तमो घातुकाः
कोकीशोकनिवर्तका कमलिनीसम्पर्कसौख्योत्सुका
लोकाना परिपालकाः क्रमणतः कालस्य [illegible]
आर्काः पातकपावका हृदि ममालोकाश्चिरं

मार्तण्डं जगदण्डनायकमसद्दण्डं धरन्तं भृशं
चण्डैर्भानुभिरभ्रमण्डलमुदस्याहिण्डमान
सारस्यादुरुपुण्डरीकमुकुलानाखण्डयन्तं
नौमि व्योमतलैकमण्डनमहं [illegible]

मञ्जुगुञ्जदलिव्रजैश्चटुलवागालापिनीं पद्मिनीं
श्रीकादम्बनितम्बिनीकलरवैः शिञ्जानमञ्जीरिणीम् ।
नीलैः कुन्तलिनीञ्च शैवलचयैः फुल्लाम्बुजैः पुष्पिणीं
श्यामां श्यामलशाद्वलेन परितः श्लिष्यत्ययं द्योमणिः ॥

अर्चां पुष्पमचर्चिकाभिरुचितां सञ्चच्छमानं दिवा
चञ्चन्मेचकवारिवाहचिकुरोदञ्चद्रुचाऽनीचया ।
मित्र कञ्चुकितद्रुमाचलकुचा व्याकोचिनीभिश्चर-
न्त्युहृश्याच्छहृदश्च दाडिमसुमच्छायं वनीदेवताः ॥ १७ ॥

किं लेखर्षभनीलरत्नफलके खे दीप्तचक्रं हरेः
खद्योताख्यमिहाखिलान्मुनि खिलीकर्तुं खलान्खेलति ।
किं वा मेद्बुति वेदशेखरखनेरुत्खातमेकं परं
ब्रह्माखर्वपराक्रमः खरुचिरस्सोयं खगेशद्युतिः ॥ १८ ॥

भव्यं भूरि गभस्तयोऽभ्रमभितो भ्राजिष्णवो भावय-
न्त्वस्मभ्य, परिभाव्य भान्तितरा भानोर्भृशं भीकरम् ।
भित्त्वाभ्यन्तरमोहमद्भुततमं भानं [illegible]
भक्तानामिह भासयन्तु भुवि नः [illegible]मानिग्रतः ॥

ज्योतिष्माञ्जयतादजादिविबुधैः पूज्योऽब्जबन्धुर्जना-
न्रक्षन्व्यामधिजग्मुषो विरजसः कुर्वन्नजस्रञ्च नः ।
राजीभिः परिरञ्जयन्निजरुचां काष्ठाञ्च जम्भद्विषो
निर्व्याजेन जनुष्मतामिह रुजामाभञ्जयन्नञ्जसा ॥ २० ॥

अश्वैः सप्तभिरन्वितेन हरता शक्तिं दृशां घोसदा-
मेकः सञ्चरसे रथेन गगनाभोगे च निस्सीमनि ।
प्रत्यावासमुखं सुपर्वमृगदृग्धस्ताब्जनीराजितः
प्रस्थानावसरेऽर्क ! किन्नरसमुद्गीतापदानोऽन्वहम् ॥ २१ ॥

शक्र ! द्राग्विजहीहि वर्त्म, पुरतोऽपक्राम वह्ने ! मना-
क्तूर्णं सन्नम रे यम ! स्वपितरं, किञ्चेष्टसे नैर्ऋत ! ।
पाशिन् ! जागृहि, मा स्तं कुरु मरुन्मा माद्य यक्षाधिपे-
त्युच्चैर्भास्कर ! पारिपार्श्वकगणा गर्जन्ति ते प्रस्थितौ ॥

पृथ्व्यां किञ्चन नोदपत्स्यत विभो ! त्वं नाभविष्योऽर्यम-
निष्प्रत्यूहमवक्ष्यदन्धतमस[1] स्वेच्छाधिपत्यं भुवम् ।
त्वं लोकैकविलोचनं, जगदिदं त्वत्प्रापितप्राणनं
गायत्र्येकरस ! प्रचोदय धियं सत्ये पथीत्यर्थये ॥ ३२ ॥

मेरुं ते परितः प्रदक्षिणमहर्नाथान्वहं क्राम्यतो
निर्वृत्ते उदयाप्ययौ भगवतो दिग्देशभेदादुभौ ।
छान्दोग्योपनिषद्यपि स्फुटमिदं, प्रत्यक्षयकुर्वेध्व ये-
केचिन्मण्डलमण्डकल्पमवनेर्यन्तः स्वयं सर्वतः ॥ ३३ ॥

द्योयानेन च कोऽप्युदप्लवत सोऽपश्यत्त्वदीयोदयं
सोऽयं भास्कर ! सततस्त्व इति तद्वन्यात्मतीमो वयम् ।
माहात्म्यं समजानतास्मदृषयो योगप्रभावेण ते
यस्मात्कश्यप एव पश्यक इति श्रुते मुनिभिः स्मृतः ॥ ३४ ॥

वर्णानां निधयोऽपि शुद्धहरितोद्रिक्ताः प्रशस्ता भृशं
मध्याह्नार्ककरा निगीर्णमशनं जीवामृतं कुर्वते ।
भुञ्जानाः सकृदेव तत्र समये सन्तः पुरा धार्मिकाः
पर्यप्त्पर्युरिमां हि भारतभुवं प्राज्ञाश्चिरञ्जीविनः ॥ ३६ ॥

आरोग्यं ददतामनामयकृमीनावर्धयन्तो वपु-
ष्पुस्नाः स्पर्शनमात्रतस्त्वजगन्नाथस्य पूता.स्वतः ।
प्रातर्मूरिनमस्कृताश्चिरतरं स्वान्ताधिरूढं तमो
धन्त्याद्यन्तविहीनतामुपगताः खद्योत ! विद्याप्रदाः ॥

नानादिक्षु विभिन्नवर्णसुभगं मन्विन्त्यमर्त्या अपि
ब्रह्म ! त्वां समुपासितुं श्रुतिशिरोवाक्याद्व्रजन्त्यर्हताम् ।
देवानामपि दैवतस्य भवतः प्राप्तुं प्रसादं ममा-
प्यार्हन्ती [1]भवकेलि भास्कर ! भवाम्भोधौ निमग्नोऽर्थये ॥

पात्रेणार्क ! हिरण्मयेन पिहितं सत्यस्य वक्त्रं परं
पूर्पस्त्व तदपावृणु द्रुततरं मह्यञ्च मार्गार्थिने ।
धर्माद्याचरणेन मे करणमप्याभ्यन्तरं शुध्यता-
त्सोऽहं त्वं त्वमहं मनिस्त्वमुहुर्ध्यानेन संवर्धताम् ॥३९॥

---

1. भवकेल्याशिषि युग्

अत्रात्मकतानिरूपणमुखात्सार्वात्म्यमाहुस्तरां
प्रश्नाद्याः श्रुतिमौलयः समुदिता. श्रीद्वादशात्मस्तव ।
त्वद्विश्वं समुदेति, तिष्ठति तथा त्वय्येव संलीयते
त्वय्यध्यस्ततयेव भाति मिहिर ! द्वैतप्रपञ्चः समः ॥

देवानामपि दुर्लभं श्रितवतामङ्कं जनन्या भुवः
सूर्य ! त्वं परिपालकोऽसि जनक. क्रीडार्भकाणाञ्च नः ।
पापाचारपरा अधस्तव वयं किं किं रवे ! कुर्महे
शक्तोऽपि क्षमसेऽपराधमखिलं सर्वंसहेवेह न. ॥ ४१ ॥

शीतानामियदौष्ण्यमत्र समयेऽपेक्ष्य तथा नेयदि-
त्येतत्सर्वमहस्कर ! त्वमनुचिन्त्यैवर्तुषु भ्राजसे ।
सत्येवं त्वयि दोषमेव जनता द्वन्द्वासहिष्णुर्नवी-
त्यात्माज्ञानमशेषवस्तुषु मृषा दोषं समुद्भावयेत् ॥ ४२ ॥

सन्तापस्तव तारतम्यमयते देशप्रभेदाद्रवे !
घर्मौष्ण्यात्कनिचित्सपद्यमृपनेत्यशीष्म शदरद्धयम् ।
यद्यप्यत्र न दुष्यसि त्वमस्मिन् कर्मोत्थभोग्य तया-
व्यासाम्यां प्रवदन्त्यतः सितगुहा भू प्रचण्डोऽधिकम् ॥

वर्षिष्यन्त्यचिराद् ध्रुव करिवराकाराश्च धाराधरा
सस्याद्यैर्हृदय हरिष्यति धरा पुष्णात्यपूर्वां श्रियम् ।
मत्वैव ह्यसहामहि प्रतिदिन क्रूर प्रताप तव
म्लानानामिह न क्षुधा शुचि भृश कामान्द्रुत पूरय ॥

श्रेयो धर्मफल स धर्मनिवहोऽनुष्ठित्यपेक्ष स्मृत
कालापेक्षमनुष्ठितिप्रकरण कालस्त्वदुत्पत्तिक ।
सर्वेष्यापि निदानमेवमनघ सर्वात्मक वस्तुत
स्त्वा ब्रूम श्रुतिदुग्धवार्ध्यमृतमित्यद्वापरं भास्करं ॥

प्रत्यासन्नतर स्फुरस्यहिमरुग्यत्त्वं परब्रह्मण
तस्माद्वेदशिरस्त्वयि व्यधित तद्दृष्टिं जगत्सष्टरि ।
काम सन्तु सहस्रश सुमनस स्वर्गस्य भारा पर
त्वामेवाहमहर्दिव हृदि दधे ससारवार्धेस्तरिम् ॥ ४६ ॥

एकर्ये ! भवत प्रभावमचनौ को वेद कृत्स्न नर
त्वादृक्षा वहव प्रतिग्रहमपि भ्राजन्त इत्यद्भुतम् ।
व्योमेद परिशिष्यते बहुतर दत्वावकाश च वो
यौरीशस्य विभूतिलेश इति चेद्विष्णु स कीदृग्भवेत् ॥

त्वत्सम्प्राप्य महोत्सव कुमुदिनीजारः समुद्राद्रुचां
सूर्यमन्य इव स्वयं विशदयन्नाशा मनागंशुभिः ।
चारित्रात्कुलसुभ्रुव. कति बत ! प्रभ्रंशयामासिवा-
न्दातारं नियतं भजेत वृजिनं दुस्सम्भवानार्जितम् ॥ ४८ ॥

आश्लेक्ष्यन्निव लक्ष्यसे दिनकर ! प्रत्यक्पुरन्ध्रीं करै-
र्हर्षीद्धाग्रनवासरैव समलङ्कुर्वद्भिरात्मत्विषा ।
स्पर्धेते ह्यधुना परस्परमुभे द्यौश्चापि विश्वम्भरा
चेतो हर्तुमहो ! सरक्तिमसुषमा पूर्णा समुद्रीव नः ॥

फुल्लं मल्लिवनं श्रयन्ति मधुपाः सकान्तागीतक्रमा
वात्याहत इव स्वयं मलयगो वात. शनैरागतः ।
नानादिग्भ्य उपागता द्विजगणा नीडद्रुमानाभज-
न्त्यम्भोजिन्यपि मन्दमन्दमवशा निद्रां समालिङ्गति ॥

अन्तश्शीतमपीषदुष्णमुपरि व्यामिश्रणात्सौख्यदं
रोध.पाटलपुष्पपातसुरभि स्वच्छं पयो बिभ्रतीम् ।
वापीं स्नातुमुपागताः प्रियनवैर्वाचो वमाना मितं
क्रीडन्त्यप्सु दिनावसानसुभगस्तज्जायताद्योऽन्वहम् ॥

श्रान्तेवोद्धवनेन कापि युवति शश्वत्समालिङ्गति
प्रेम्णा नेत्रनिमीलनाभिनयन् यमा पर कामुकम् ।
ऊरुभ्यामुपगृह्य ता स च युवा यत्नाज्जलाभ्यन्तरे
सामर्थ्यातिशयं प्रदर्शयत्यहं ! वहिस्सम्भ्रमात्यमाव परम् ॥

वृध्याप्यन्यपुरन्ध्रिमेकनरणो वस्त्रस्य सारूप्यतो
भ्रान्ति प्राप्य दृढालिलिङ्ग सुदृढ पश्चादुपेत्यादरात् ।
जानानाप्यथमन्य इत्यमकृदुद्भूतोरुरोमोद्गमा
स्वैरं साभिनिनाय नायकधिय पश्चाद्वद्रोक्तिभि

प्रेयान् मे प्रवसत्यनेककारणो हित्वा रसज्ञामिमा
काम कामशरार्दिताहमनय रात्रीश्च बह्वीरिति ।
कस्मैचिन्न निगद्यता सखि ! दयाहीना युवानो यते
सूचे कापि नवा मदनस्मरसम कश्चित् दशा पश्यती ॥

नृणामीदृगधर्मवर्त्मचरण सर्वैर्विगीत सतां
माद्दर्शीनिति लज्जया विगतमेघोऽम्बुपूर्णीवरे ।
मित्राधीनतरामसौ शशधरो रागानुदेष्यन्करै
सीधुस्यन्दिच्छमो न भवतीत्याग्याभ्युमीदृशोऽत्र च ॥

किं तप्तायसपिण्ड एष जलधिं शुष्कं विधातुं प्रत-
स्थाहोस्वित्प्रकृतेश्शिरोमणिरयं नृत्यात्स्वयं प्रच्युतः ।
किं वा मूर्ततरोऽनुरागनिकरो नङ्क्ष्यन्प्रतीच्याः स्त्रियं
किं वा पुण्यफलं महत्परिणतं सत्कर्मिणां व्योमगे ॥

यस्मिन्नात्मरुचं निधाय दययास्मासु, स्वयं लीयसे
वह्निं न्यासमिव तं भवत्प्रतिनिधिं संस्तुर्महे भक्तितः ।
सन्ध्यायामुषसो मितीर्थ भगवन्नन्येषु वज्रोपमं
मन्देहाख्यसुरारिसैन्य तरसा प्रत्युद्गनाम पुरा ॥ ५७ ॥

साक्षाच्छ्रीपुरुषोत्तमोऽपि जगतां क्षोभं भृशं तन्वतो
निघ्नो । निनिहत्य सायकगणे रक्षोधिपस्यान्वयम् ।
धर्मान्स्थापयितुं श्रुतीनिगदितानाचर्य भूम्यां स्वयं
पृते तेऽवततार रघुकुलभो श्रीरामचन्द्रात्मना ॥ ५८ ॥

श्रद्धाभक्तिसमन्विताय भरत पुत्राय मेधाविने
दिव्यं व्याकरणं समुपादिश इति प्राहुर्महान्तः सदे ।
मन्ये [illegible]पुपासकाय वितर ज्ञानं सुशब्दार्थयो
[illegible] येन च कर्मबन्धमखिलं यन्या त्वदीयं पदम् ॥

रोगं संहर सर्वमीश्वर ! दृशोः शक्तिं मदीयां कुरु
  श्रीमन्नर्क ! धृतिं हृदि स्थिरतरां प्रज्ञां च लोकोत्तराम् ।
विप्रायानुगृहाण सूक्तिममृतस्रोतस्विनीस्पर्धिनी-
  माकल्पं जयतात्प्रभाकर ! कृतोऽस्माभिः प्रभावस्तव ॥ ६० ॥

श्लोकानामिह षष्टिरेकसहिता मार्ष्टु श्रियं शाश्वतीं
  सम्पत्तिं शुभसन्ततिं वितरतादादित्यभक्तिं पराम् ।
सन्तः भासमुखा भवन्तु सततं सूर्य ! प्रसादेन ते
  वाचामस्तु फलेग्रहिः समुदयो लोके कवीनां सताम् ॥

---

इति महामहोपाध्यायस्य श्रीकृष्णमूर्तिशास्त्रिणः पण्डितराजस्य
मद्रप्रान्तसंस्कृतास्थानकवेः कृतिषु
प्रकृतिविलासकाव्ये
प्रभाकरप्रभावो नाम सप्तमो विलासः ।



श्रीः

# प्रकृतिविलासकाव्ये

## शर्वरीसौन्दर्यं नाम

## अष्टमो विलासः

भूत्यै भूयात्तुहिनमहिभृत्कन्यका तन्यमान-
क्रीडे डिम्भे द्विरदवदने लालयन्ती निजाङ्के ।
शर्वर्यास्मि प्रलयसमये संहरन्ती प्रकोपा-
द्व्याजीकृत्य त्रिपुरजयिनं स्वीयशक्त्यैव सर्वम् ॥ १ ॥

कृत्स्नां रात्र्याः श्रियमिह गिरा दूरतो वर्तमानां
पृथ्व्यां माहात्म्यमिव कविः स्तोकवाग्वक्तुमीशः ।
चित्रं ह्येतत्कविकुलयशोलिप्सया वञ्च्यमाना
मर्त्याः केचित्कथमपि विदुर्नात्मनः शक्तिमल्पाम् ॥ २ ॥

सौन्दर्याविष्करणविषये तुल्यरूपास्त्रियामा
भेदो नात्र स्फुरति सहृदां पश्यतोश्च द्वयोर्नः ।
आद्यन्तौ श्रीपदविनिहितौ व्यञ्जयन्त्यां परेऽत्र
किं वा कर्तुं प्रभवतु मकारैकको वर्णभेदः ॥ ३ ॥

ताम्रैरभ्रैः स्फुरति परितः पुष्करश्च प्रदोषे
यान्त्यावासान्प्रति सुरभयो वत्ससन्दर्शनोत्काः ।
स्निग्धां दिश्यत्यमितकुतुकात्सद्मिनीं मन्दनिद्रा
-दीपान्यस्यन्त्यधिगृहमुखं रम्यवेषाश्च योषाः ॥ ४ ॥

फुल्ले मल्लीवनमलिकुलैर्व्याप्तमालापशीलैः
पत्रिव्रातैर्मधुरविरुतैराश्रितारशाखिनीडाः ।
यातः पोतप्लुतयति सरित्प्रान्तवन्यां विहारी
पांसुक्रीडापरवशहृदो बालका वासरान्ते ॥ ५ ॥

रोधस्सिन्धोः कतिचन, परे ह्यमुद्यानमन्ये
स्रोतस्विन्याः पुलिनमितरे तुङ्गशैलेन्द्रशृङ्गम् ।
इत्थं स्वस्वाभिमतयुवतीसार्थमानीय यूनां
स्तोमः कामं मलयमरुतं सेवते वासरान्ते ॥

मुष्णन्क्षोण्यास्तरणिकिरणोद्गीर्णमौष्ण्यं क्रमेण
प्राणान्पुष्णन्विचरति मरुद्रौहिणारण्यशीर्णः
आराद्धुं श्रद्दधति विधिवद्भूसुराद्याश्च सन्ध्या-
मच्छिन्नश्च झणझणरवो व्यज्यते [illegible]

श्रीमत्येषा प्रकृतिरमितप्राभवा भ्राजमाना
त्रैगुण्येन, प्रथयितुमनास्तामसीमात्मशक्तिम् ।
बिभ्रत्याख्यां रजनिरिति च, स्वैरमावृत्य विश्वं
क्रीडत्युच्चैः किमु सहृदयान्विभ्रमै रञ्जयन्ती ॥ ८ ॥

तेजोऽभावस्तम इति मतं धीमतां नादरार्हं
नीचाङ्काक्षितिस्थितिमुपगतं तेज एवान्धकारः ।
सान्द्रामान्द्ये अपि च तमसस्सङ्घटेते क्रमाद्वि-
त्याहुर्निर्द्वीपरमिह बुधा वस्तुतत्त्वं विदन्तः ॥ ९ ॥

रम्या रात्रिः परमगुरुणा सुन्दरिम्णा निगीर्णा
सन्ध्याभ्यामप्युपचितरुचिस्सेव्यमाना सखीभ्याम् ।
चालन्त्याप्युपरतिकृतं विश्रमं द्राग्दिशन्ती
कस्य प्रीत्यै न भवति समस्तप्राणिनः पुष्णतीयम् ॥ १० ॥

सूर्यस्सोऽयं न खलु सहते स्वेतरेषां प्रकर्षं
यत्तैर्पुण्याद् भृशमभिभवत्यह्नि नक्षत्ररक्षम् ।
[1]तेभ्यो भातुं वितरति यथेच्छं तमिस्रावकाशं
द्रष्टुं प्रायः परपरिभवं न क्षमेरन्मृगाक्ष्यः ॥ ११ ॥

---

[1] गुणभूतानपि नक्षत्राणि तच्छब्देन परामर्शः

द्यावाभूमी स्वरुचिनिचयैरञ्जनप्रत्यनीकैः
सान्द्रस्निग्धैस्सरभसमभिव्याप्य गाम्भीर्यभूम्ना ।
विश्वस्योपर्यपरिमितमुत्सेकतोऽनन्तर यं
निर्वोढुं श्रीः स्फुरति रजनेराधिपत्यं समस्ताः ॥ १२ ॥

आपृण्वानाप्यविरलतरैः श्यामलिम्नां समूहै-
र्नेत्राणि द्राग्भुवि तनुभृतां दुष्यतीयं न रात्रिः ।
तद्वद्राकाश्रयमधुरिमस्तोमकुक्षिम्भरित्वा-
त्पुष्यत्येषात्मनि हि सुषमां कामपि प्रीतये नः ॥ १३ ॥

आस्तां दूरादनुपमसमाम्नायगम्योऽर्थमार्गं
तस्माल्लब्धद्युतिरपि विधुर्यामवत्या रसज्ञः ।
अध्येमैत्रोऽप्यधिगतरसो विद्युतं श्लेष्टुमीष्टे
स्त्रीणां प्रीत्यै भवति रसिको, नैव माहात्म्ययुक्तः ॥

सौन्दर्योद्गार्यपि न तिमिरं शार्वरं रोचयन्ते
मर्त्याः प्रायस्त्वयमधिनिशं संविशन्ति श्रमेण ।
रात्र्यां सर्वा प्रकृतिविहृतिर्बन्धुरा निष्फलैषां
नानर्थाय प्रभवति तमो बाह्यमन्तस्तमोवत् ॥ १५ ॥

स्वत्वेन घोरभिमततमं नीलिमानं मनोज्ञं
    दिग्योषिद्भ्योऽञ्जनविधिकृते संविभज्य प्रदातुम् ।
कारुण्येन प्रकृतिरनघा यामिनीं किं नियुङ्क्ते
    रिक्तात्मानः किमपि न दिशन्त्यन्तरेणापहारम् ॥ १६ ॥

ऋक्षैः मेदुरैस्तरळतरळद्योतमुक्तासगोत्रै-
    र्व्योम्नि श्यामे निचुळिततमे सान्द्रमुग्धैर्विताने ।
तुङ्गं रङ्गस्थलमिव भुवो गोलमाक्रम्य मूर्त्या
    श्यामा काचित्कलयति मुदं नर्तकी श्रीर्निशायाः ॥ १७ ॥

कातर्येणार्यमघृणिभुवा गह्वरोर्वीरुहाद्या-
    वन्तर्लीनान्सरभसमहन्यन्धकारार्भकान्स्वान् ।
आश्लिष्यैषा भजति रजनिर्निर्वृतिं कामपि द्रा-
    ङ्मातृप्रेम्णः किमपि न परं श्रेयसे कामनार्हम् ॥ २० ॥

प्रत्नत्वेनाञ्जनपरिचयाच्छ्यामलस्निग्धमूर्तिः
    सान्द्रा कालायसकृतबृहच्छृङ्खलामालिका या ।
सन्धातुं द्यामपि वसुमतीं कल्पिता श्रीप्रकृत्या
    सैवास्माकं स्फुरति परितश्शर्वरीकैतवेन ॥ २१ ॥

अब्धेरूर्मीन्मदशिखिगलश्यामलिम्नाह्वि लब्ध्या-
    नात्माद्वैतीकरणनिपुणा दर्शयन्ते तमिस्राः ।
निर्मर्यादान्द्विरदनिकरानञ्जनाद्रिप्रजाभा-
    नातिश्वेतैरभिनिपततः फेनपुञ्जै रदौघैः ॥ २२ ॥

झञ्झावातव्यतिकृतसमुत्तुङ्गभङ्गोत्तमाङ्गा
    पर्युत्क्षिप्तानृजुतरवृहत्फेनदंष्ट्राकराळा ।
विष्वग्व्याप्ताऽसितघनकचा दुश्श्यवैरट्टहासैः
    काली रात्रिर्ध्वनिमपहरन्त्यम्बुधौ नृत्यतीव ॥ २३ ॥

प्रक्रीडद्भिर्बहु, सरिदधीशानरङ्गे मरुद्भि-
र्नीलैर्वस्त्रैः कवचिततनुः फेनपुष्पावतंसाः ।
सम्भूयोच्चैःकृतरुततीर्वीचिकाख्याः पिशाची-
र्यामिन्येषा परमरसिका नर्तयत्यात्मतृप्त्यै ॥ २४ ॥

सिन्धुस्सोऽयं परमकृपया प्रेरितो यामवत्या
गौराङ्गाभ्यस्समुचिततमान्वल्लभाभ्यस्सरिद्भ्यः ।
श्यामाश्लीनांशुकसमुदयान्प्राजतैस्तन्तुजालैः
प्रोतप्रान्तानहह ! कलयते फेनिलोर्मिच्छलेन ॥ २५ ॥

देव्या रात्रेरविरळतम.कन्दळीभिर्निगीर्णैः
फेनावल्या खलु धवलिमा दृष्टनष्टात्मनोऽब्धौ ।
न्यासेऽस्यन्तं हृदयकुहरे तीव्रमोहान्धकारै-
र्नीतिस्वच्छां भृशमनुकरोत्यस्थिरां सत्त्ववृत्तिम् ॥ २६ ॥

अद्रेस्तुङ्गं शिखरमधिरुह्यात्मना चेत्क्षपायां
प्रेक्षेत श्रीपतिनिहितिं जातुमेकस्समन्तात् ।
धीरध्वानान्कति स शृणुयात्स्वात्मसंवादशीला-
न्मयेद्रावानपि कतिचिदालोचनासेचनोत्कान् ॥ २७ ॥

स्रोतस्विन्योऽवनिधरगुहाभ्यन्तरेभ्योऽभिरामा
निष्क्रामन्त्यः स्फुटिततटपत्प्रान्तपातप्रणादा !
वेगाद्वाशीञ्छिशिरपृषतामुत्किरन्त्यस्समन्ता-
न्नक्तं व्यक्तेतरसितपटास्तारदीर्घास्त्वयन्ति ॥ २८ ॥

श्रेणीबद्धक्षितिधरततेरन्तरालावकाशा-
न्नापूर्य द्राङ्निबिडिततम कज्जलेन क्षपेयम् ।
निश्छिद्रामुच्छ्रितनरमहाभित्तिमेकामिवेद्धा-
मारूढ्योच्चैः प्रकटयति न स्वं हि गम्भीरिमाणम् ॥ २९ ॥

भ्राम्यद्भूरिद्विपपरिवृढस्फारफीत्कारभात-
क्षुभ्यत्सिंहस्खलनभरसमुत्थरानिभृद्गुहौघ ।
श्रोत्रप्रान्तप्रियसुहृदविच्छिन्नझिल्लीविराव
शैले ध्वान्ते हरति सहसा हन्त ! भावैर्निशीथे ॥ ३० ॥

वातनातोद्धुतमहिरहान्योन्यसङ्घर्षजन्म-
मोघप्रार्चिर्दवहुतभुज पार्गराजाग्रसन्त ।
धूमस्तोमाननुपरि समुपारोहतो नक्तमद्री
दन्तिभ्रान्त्योद्यतपदयुगाम्सञ्जिहीर्षन्ति सद्यः ॥ ३१ ॥

ज्योतिर्वल्लीकवलिततमःकन्दला क्वापि भागे
व्यक्ताव्यक्तद्रुमगिरिसरित्सन्निवेशा परत्र ।
दर्शं दर्शं हसति नु दिवं मेदुरारण्यभूमि-
र्विद्युद्विद्योतितबहुविधाकारधाराधराढ्याम् ॥ ३६ ॥

रोधस्यन्येऽशिखरिशिखरे वाथ बद्धानगारा
न्मत्स्यमानुच्छ्रिततरशिरस्सद्दीप्यत्पताकान् ।
अध्युष्य स्त्रीपृथुकसहिता मोमुदत्यन्तिमन्तो
दृष्ट्वा नावः स्खलितजलालक्ष्यदीपप्रकाशाः ॥ ३७ ॥

धीयानानि प्रवरमकराकाररहस्यानि यन्त्र-
प्रत्यकृत्यद्रुतनरपरिभ्रान्तपार्श्वच्छदानि ।
क्षुद्रैर्दीपैः श्रुतिपुटकटुध्वानधीराणि रम्या-
ण्यार्द्रार्के प्रकृतिसुषमा वीक्षमाणा डयन्ते ॥ ३८ ॥

विद्युच्छवितप्रवरविविदीपसङ्घैस्समन्तात्
स्फीतालोका प्रतिपुरमहो निर्विशेषा रजन्यः ।
केतूनानारवमुखरिताः पण्यवीथ्योऽतिदीर्घा
रथ्यास्सन्धिप्रसममुपमाः कृत्रिमारामभूसा ॥ ३९ ॥

वृन्दोऽप्यूनानदहृदयानङ्गसाऽऽत्र पुंकामा
कर्णाभ्यर्णप्रचरणगुणैराकरैर्विभ्रमाणाम् ।
नेत्रैर्नीलाञ्जनपरिचितैर्वारयोषाम्मुवेषा-
म्मिष्टन्त्यस्तत्रपमधिगृहद्वारमीषद्विहासा ॥ ४० ॥

आयस्यन्तोऽप्यहनि निपतत्कालपाथ प्रपरक
विश्राम्यन्ति स्वयमधिनिशं मोदमाना कुटुम्बैः ।
मेदोवृद्ध्या मुदितहृदया निश्चलन्तोऽन्तिमन्त-
श्चिन्ताक्रान्ता बत ! कतिपये नैव निद्रां लभन्ते ॥ ४१ ॥

क्लिष्टं स्निग्धैर्मुरजनिनदैर्गीतमेकत्र रात्रौ
वंशीदृश्यं क्वचिदपरतो नर्तनं वारनार्याः ।
दाम्पत्ये क्रीडा क्वचन विविधास्सत्कथानां प्रसङ्गा
इत्थं नित्योत्सवमुदित पत्तनं चित्र रम्यम् ॥ ४२ ॥

भक्त्युन्मेषादिव समुदिता देवतासन्निधाव
ध्येये ध्यानाभिनयकुशला कामयन्ते मुमुक्षी ।
अन्ये सम्मर्दनकुतुकिन स्सप्रमादच्छलेन
स्पृष्ट्वा रम्भा स्मरपरवशा स्त्रैणमभ्यापतन्ति ॥ ४३ ॥

ज्योतिर्वल्लीकबळिततमःकन्दळा क्वापि भागे
व्यक्ताव्यक्तद्रुमगिरिसरित्सन्निवेशा परत्र ।
दर्शं दर्शं हसति नु दिवं मेदुरारण्यभूमि-
र्विद्युद्विद्योतितबहुविधाकारधाराधराढ्याम् ॥ ३६ ॥

रोधस्यद्येऽशिखरिशिखरे वाथ बद्धानगारा
न्मत्यमानुच्छ्रितत्तरशिरस्सन्नदीप्यस्पताकान् ।
अध्युष्य स्त्रीपृथुकसहिता मोमुदत्यन्तिमन्तो
दृष्ट्वा नावः स्वदळितजलालक्ष्यदीपप्रकाशाः ॥ ३७ ॥

धोयानानि प्रबलमकराकारहस्यानि यन्त्र-
प्रत्यकृत्यद्रुततरपरिश्रान्तपाश्वैच्छदानि ।
क्षुद्रैर्द्वीपे श्रुतिपुटकटुध्वानधीराणि रम्या-
ण्यारुह्यांके प्रकृतिसुषमां वीक्षमाणा इयन्ते ॥ ३८ ॥

विद्युच्छक्तिप्रभवरुचिभिर्दीपसङ्घैस्समन्तात्
स्फीतालोकाः प्रतिपुरमहोनिर्विशेषा रजन्यः ।
केतृव्रातारवमुखरिताः पण्यवीथ्योऽतिदीर्घा
रथ्यास्सन्धिष्वसमसुषमाः कृत्रिमारामभूम्ना ॥ ३९ ॥

पूर्णोऽप्यूनानदहहृदयानञ्जसाऽऽकृष्टकामाः
कर्णाभ्यर्णप्रचरणलसैराकरैर्विभ्रमाणाम् ।
नेत्रैर्नीलाञ्जनपरिचितैर्वारयोषाः सुवेषा-
स्तिष्ठन्त्यस्तत्रपमधिगृहद्वारमीषद्विहासाः ॥ ४० ॥

आयस्यन्तोऽप्यहनि निपतत्कालपार्थःप्रपरकं
विश्राम्यन्ति स्वयमधिनिशं मोदमानाः कुटुम्बैः ।
मेदोवृद्ध्या मुदितहृदया निश्चलन्तोऽस्तिमन्त-
श्चिन्ताक्रान्ता बत ! कतिपये नैव निद्रां लभन्ते ॥ ४१ ॥

श्लिष्टं स्निग्धैर्मुरजनिनदैर्गीतमेकत्र रात्रौ
वंशीकूज्यं क्वचिदपरतो नर्तनं वारनार्याः ।
द्यूताः क्रीडाः क्वचन विविधाम्सरकथानां प्रसङ्गा
इत्थं नित्योत्सवबहुमितं पत्तनं किन्न रम्यम् ॥ ४२ ॥

भगवदुन्मेषादिव समुदिता देवतासन्निधाव-
प्येके ध्यानाभिनयपुनगाः कामयन्ते कुलश्रीः ।
अन्ये सम्मर्दनगुरुभिः ससमादच्छलेन
त्यक्त्वा लज्जां स्मरपरवशाः स्त्रैणमभ्यापतन्ति ॥ ४३ ॥

अन्योच्छिष्टं मधु कुतुकतः सम्पिबन्तो मदान्धाः
स्वैरं स्त्रीणामपि विनिमयादक्रमानेकनृत्याः ।
सद्यो रङ्गस्थलविलसितान्हन्त ! निर्वाप्य दीपां-
स्तिर्यक्कृत्यं विदधति समे निस्त्रपा ह्यन्यदेश्याः ॥ ४४ ॥

विद्युद्दीपध्वजभृदुदरोद्भासिनैकासनस्थ-
प्रान्तप्रेक्षोत्सुकजनशिरःश्रेणिदीव्यद्गवाक्षा ।
उल्लङ्घ्य ग्रामनगिरिनदीर्धूमिता यानपङ्क्ति-
र्देशाद्देशं गुफुगुफुरवैरायसे याति मार्गे ॥ ४५ ॥

प्रासादांश्च प्रतिपुरवरं चन्द्रिकासारगौरा-
न्रम्यान्वातायनपरिसराकीर्णमञ्चप्रपञ्चैः ।
अध्यास्यैकेऽभिमतयुवतीस्स्पर्धिनीस्स्वर्वधूभि-
र्भुञ्जाना भान्त्यशिथिलपरीरम्भसंरम्भभाजः ॥ ॥ ४६ ॥

गाढाश्लेषं कलयितुमनाः कामिनीनां रसज्ञो
देव्या मह्याः शिखरिणि करैः सत्वरं व्याप्तैः स्वैः ।
पश्येन्दुर्द्रागुद्दलयति तमःकञ्चुकं प्राणनाथे-
त्युक्त्वा सद्यः पुळकिततनुः सुस्तनी कापि जाता ॥ ४७ ॥

काचि स्वापाभिनयचतुरा शश्वदाकारितोच्चैः
　पत्या निर्यत्स्मितमपि बलात्सन्नियम्य स्थितान्ते ।
ईषत्स्पर्शोदितपुलकितज्ञाततत्त्व स्वदोर्भ्या-
　माश्लिष्य स्मरशरहतामुन्नवक्षोजयुग्मम् ॥ ४८ ॥

द्यूतं कृत्वा दृढतरपरिष्वङ्गमुत्तुङ्गहर्म्ये
　शुभ्रज्योत्स्ने व्यवहृतिकथां दम्पती प्रारभेताम् ।
भर्ता रामं कथयति समेष्वेकदारं रसज्ञं
　भार्या गोपीहृदयहरणव्यग्रलीलञ्च कृष्णम् ॥ ४९ ॥

वेणीमल्लीसुमपरिमळभ्राम्यदिन्दिन्दिराणा
　वारस्त्रीणां युवजनमनोहारिभिर्हावविलासैः ।
धन्यम्मन्याः कतिचन समारुह्य नौकाः प्लवन्ते
　निर्निद्रेन्दीवरनिचुळिनास्वप्सु लीलासरस्याः ॥ ५० ॥

प्रायो व्यर्थं भवति रजनौ भासमानोऽप्यर्कः, य-
　स्सर्वे वृत्तव्यवहृतितया संविशन्त्यायामे ।
रथ्यायाञ्च व्यपगतभय फेरवस्सञ्चरन्ति
　श्वानो धावन्त्यसहृन्दमिनो निर्निमित्तं भषन्तः ॥ ५१ ॥

सत्यप्येवं विमलमनिलं सर्वतश्चेक्षुसार-
स्पर्धीन्यम्बून्युचितमशनं मङ्गहीनां सुषुप्तिम् ।
लब्ध्वा चिन्तालवविरहिताः स्वस्वकृत्यानुरक्ता
जीवन्त्यब्दाञ्शतमपि समे ग्रामवासेन धन्याः ॥ ५२ ॥

यामैर्युक्तां सममिदधते रात्रिमेके चतुर्भि-
र्मर्त्याः कृत्यप्रणिहितधियः सञ्चरन्त्याद्ययामे ।
क्रूरात्मानः फणधरमुखा जन्तवश्च द्वितीये
यक्षा रक्षांस्यपि बहुतरैः क्षुद्रकृत्यैस्तृतीये ॥ ५३ ॥

आगच्छन्तः पितृभिरमितप्राभवैर्देववर्या-
स्तुर्ये यामे गजमुखमुखाः क्षेममाधातुकामाः ।
सर्वान्दृष्ट्वापि च सदनिनो बुध्यमानान्कुटुम्बै-
स्तुष्टात्मानो विदधतितमामाशिषो द्रागवन्त्याः ॥ ५४ ॥

सर्वे श्वासश्वसनगरळं प्राणिनामह्नि पीत्वा
छायावृक्षा बहिरतिजवं दुद्रिरन्ति क्षपासु ।
[1]ग्रस्त्वा दुष्टं मरुतममितं तृप्यतां शाखिमूलं
सेवायोग्यं भवति फणिनां, मानवानां तु गर्ह्यम् ॥ ५५ ॥

---

1. उदितो वेति क्त्वाया वेट्

अण्डेभ्यश्च द्विजनय इव प्राणभृद्भ्योऽसवो द्रा
　　गुत्क्रामन्ति स्वयमिह भुवि प्रायशोऽत्रैव यामे ।
तार्तीयीके भयकृति निशोऽत्यन्तमित्याहुरेके
　　सन्दभोऽत्र भवति हि महान्दारुणो रोगभाजाम् ॥ ५६ ॥

ध्यानो यस्या निशि नियमतस्तान्वते स्वोपवास
　　रात्रिं प्राहुः श्वनिशमिति ता केचनाचार्यपादा ।
साक्षात्कुर्वन्त्यपि च रजनावागमं सूर्यसूनो
　　ध्यानं कृष्णा इति च गदित प्राणितत्त्वं विदद्भिः ॥ ५७ ॥

सर्वेभ्य श्रीरजनिजननी शुभिमात्मसम्भूता
　　जीवात्मभ्य परचिति परिष्वङ्गमापादयन्तीम् ।
हित्वा भेद सपदि ददती पुष्णती चार्भकान्त
　　सैषा नित्या श्रुतिषु महिते स्तूयते रात्रिसूक्ते ॥ ५८ ॥

रम्यश्चन्द्रस्तदुदरगत लाञ्छनञ्चापि रम्य
　　ज्योत्स्ना रम्यावनिपरिसरे तत्प्रसारोऽपि रम्य ।
रम्यास्त[1]म्य सरसमनसामन्धकारोऽपि रम्य
　　स्त्वित्थैकोक्त्या प्रकृतिविदित वस्तु नैवास्त्यरम्यम् ॥ ५९ ॥

---

1　तमी = रात्रि

स्त्रीपुंसाभ्यां जनयसि जगन्मातरेतत्समाभ्यां
निद्राद्वारावसि करुणयारोग्यमुत्पाद्य भूयः ।
अन्ते सर्वं हरसि भगवत्युग्रसंवर्तरात्रि.
कृत्वास्माकं पततु भवतीमन्तरेण प्रणामः ॥ ६० ॥

मृत्युं मह्यं तिरय कृपया मातरुत्सङ्गभाजे
पाप्मौघं मे सफलय रिपुष्वार्यगृह्येतरेषु ।
आकल्पं सद्विजवरकृतं विद्वदाकल्पकल्पं
श्रीशर्वर्या जगति जयतादत्र सौन्दर्यमेतत् ॥ ६१ ॥

---

इति महामहोपाध्यायस्य श्रीकृष्णमूर्तिशास्त्रिणः पण्डितराजस्य
मद्रप्रान्तसंस्कृतास्थानकवेः कृतिषु
प्रकृतिविलासकाव्ये
शर्वरीसौन्दर्यं नाम अष्टमो विलासः ।



## ॥ कपर्दिनि समर्पणम् ॥

---

काहुण्णुलूरग्रामजन्यस्वाम्यार्यस्याहमात्मजः ।
कृष्णमूर्तिरकुर्वीमां मद्रास्थानकविः कृतिम् ॥ १ ॥

पदवाक्यप्रमाणज्ञं श्रीगर्भपुरवासिनम् ।
भूवराहाचार्यवर्यमादिमं नौमि देशिकम् ॥ २ ॥

महामहोपाध्यायाख्यश्रीदण्डपाणिमखीश्वरान् ।
करुङ्गुळकृष्णशास्त्रिवरेण्यान्नौमि सद्गुरून् ॥ ३ ॥

अम्मङ्गुडिस्थितश्रीमत्परमेश्वरशास्त्रिणः ।
गुरून्पाणिनिशास्त्राब्धेर्नौम्यहं कुम्भसम्भवान् ॥ ४ ॥

येषाममीषां महता करुणादृष्टिपाततः ।
महामहोपाध्यायोऽस्मि सद्यो नौमि तान्गुरून् ॥ ५ ॥

आपो वह्निश्च होता विधुरहिमकरौ व्योम पृथ्वी समस्ता
नेत्तेऽष्टौ यस्य देहाः स पशुपतिरपि श्रीनिवासस्वरूपः ।
यस्य श्रीकृष्णमूर्ते र्गुरुपरमपदाम्भोजदासस्य नित्यं
सोऽयं नित्यं कपर्दिन्यनघकृतिमिमामर्पयात्मतृप्त्यै ॥ ६

---

## ॥ आशासनम् ॥

मनः प्रसादं संप्राप्तो वेङ्कटेशप्रसादतः ।
श्रीराजेन्द्रप्रसादोऽसौ जीयात् भुवि जनाधिपः ॥

आने-देश्मुख-खङ्गु-मुन्शिनयविच्छ्रीराजमन्त्रामुखा
मान्यास्संस्कृतमातृकिङ्करतया दीव्यासुरब्दाञ्शतम् ।
राजाजी-जवहर्-पटेल्प्रभृतिभिः स्वातन्त्र्यसंरक्षकैः
माता भारतभूमिरुत्तमतमैः पुत्रैर्विजेजीयताम् ॥

श्रीमद्भवनगराजदम्पती च जयन्त्विमे ।
कुमारस्वामिराजश्च विद्यामन्त्री च माधवः ॥

---

इति श्रीभारद्वाजकुलजलधिकौस्तुभश्रीमद्वेङ्कटसुब्बरामार्य-
वर्यतनूजस्य श्रीवेङ्कटसुब्बलक्ष्मीगर्भसम्भूतस्य
व्याकरणवेदान्तसाहित्यनिष्णातस्य पण्डितराजाद्यनेक-
बिरुदाङ्कितस्य महामहोपाध्यायस्य
मद्रशान्तसंस्कृतास्थानकवेः
कृष्णमूर्तिशास्त्रिणः कृतिषु
प्रकृतिविलासः समाप्तः

ॐतत्सत्

जय हिन्द्

श्रीकल्याण मुद्रालयः, तिरुची ।